ISSN-0975-4474
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कः-४;१

# विश्वसंस्कृतम्

( अभिनिर्देशितं त्रैमासिकम् )

( A REFREED & PEER-REVIEWED RESEARCH JOURNAL )

५६-५७ वर्षया: अङ्कौ (४;१)
दिसम्बर-२०१९, मार्च- २०२० ई.

आद्यसम्पादकः सञ्चालकश्च
**पद्मभूषण स्व. आचार्य ( डॉ. ) विश्वबन्धुः**

सम्पादकः
**प्रो. इन्द्रदत्तउनियालः**
संचालकः

सह-सम्पादकः
**डॉ. देवराजशर्मा**

प्रकाशन-स्थानम्
**विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्**
साधु आश्रमः, होशियारपुरम् - १४६०२१ (पंजाब)।

## विश्वसंस्कृतम्

( अभिनिर्देशितं त्रैमासिकम् )

( A REFREED & PEER-REVIEWED RESEARCH JOURNAL )

विश्वेश्वरानन्द-वैदिक-शोध-संस्थानस्य
प्रकाशनम्

१ अस्य प्रकाशनं प्रतिवर्षं चैत्रः-(मार्च), आषाढः-(जून), आश्विनः -(सितम्बर), पौषः - (दिसम्बर) मासेषु भवति।

२ प्रमुखतोऽस्य प्रकाशनस्योद्देश्यं संस्कृतस्य प्रचारः प्रसारः, परञ्च संस्कृत-विदुषां संस्कृतानुरागिणां संस्कृत-पाठकानां पठकानामन्येषाञ्चापि शोधकार्यकर्तॄणां लेखकानाञ्च, अप्रकाशितानां प्रकाशितचरामपि अनुपलब्धानां प्रौढग्रन्थानां प्रकाशनं, तेषां तुलनात्मकम् अध्ययनं तथा प्रत्येकं संस्कृतस्य विदुषः संस्कृतानुरागिणश्च यथाशक्ति संस्कृतं प्रति हार्दिकीं रुचिं जनयितुं विधीयते।

३ विशिष्टानां संस्कृतग्रन्थानां समालोचनं चाप्यत्र प्रकाश्यते। तत्-कृते च समालोच्यमानग्रन्थस्य द्वे प्रती प्रेषणीये भवतः।

४ यस्मिन्नङ्के लेखकस्य लेखिकाया वा लेखो ग्रन्थस्य समालोचना वा प्रकाश्यते सोऽङ्कः तस्मै, तस्यै वा निःशुल्कं दीयते।

**विशेषः-**

क. प्रकाशितचरस्य लेखस्य पुनः प्रकाशनं कथमपि नानुमतम्।

ख. लेखस्य मौलिकताया वर्णितविषयस्य च दायित्वं लेखकस्यैव मान्यं भविष्यति, न तु सम्पादकस्य न वा प्रकाशकस्य इति विशेषतोऽवधेयम्।

ग. सर्वविधपत्रव्यवहारः-संचालकः, वी.वी. आर. आई., साधु-आश्रम, होशियारपुर (पंजाब) १४६०२१। अनेनैव संकेतेन करणीयः।

संचालकः/सम्पादकश्च

## परामर्शदातृसमितिः



## पर्यवेक्षक-मण्डलम्

# अनुक्रमणी



## निवेदनम्-

पठिता भवतां लेखा धन्यवादो विधीयते।
यू.जी.सी. नियमा येऽत्र ते भवद्भिश्च पालिताः।।
शोधार्थिनां कृते भूयः प्रार्थना क्रियते मया।
पालनं नियमानां हि विशेषेण विधीयताम् ।।
चित्ते निधाय नियमान् लेखा लेख्याः प्रयत्नतः।
आवश्यकीयाः संकेताः सदा देया यतस्ततः।।
नियमस्योल्लघनं नैव करणीयं कथञ्चन।
स्वकीया एव हानिः स्यात् वृथा श्रमो भविष्यति।।
येस न्तिल ेखकाअ न्येस्‍ वतन्त्राःस न्तित ेस दा।
लेखा वा कविता वा ते प्रेषयन्तु यथेच्छया।।
धन्यवादोऽस्ति सर्वेषां लेखकानां विशेषतः।
पाठकानाञ्च ापि सौदार्हं सदा स्यादिति कामये।।

**इन्द्रदत्त उनियालः**
**संचालकः-सम्पादकश्च**

ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्ष: ५६-५७, अङ्कौ-४;१

# सांख्ये प्रत्यक्षस्य प्रक्रिया

**प्रो. इन्द्रदत्तउनियालः**
संचालकः सम्पादकः
वी.वी.आर.आई., साधु आश्रमः, होश्यारपुर।

प्रत्यक्षं हि एतादृक् प्रमाणं येन विना लोके किमपि कार्यं न सम्पादयितुं शक्यते। लोके यत् किञ्चिदपि सत्यं मन्यते, तत् प्रत्यक्षेनैव सिद्ध्यति। दर्शनशास्त्रे प्रत्यक्षम् एतादृक् तत्त्वम्, यस्य संख्याविषये, मान्यताविषये, स्वरूपविषये च वैमत्येऽपि, प्रत्यक्षमस्तीति सर्वमान्यं, सर्वग्राह्यं सर्वैरेव दार्शनिकैश्च स्वीकृतमेव। भवतु नाम, तत्र चार्वाकानां मते सर्वमान्यस्य सर्वशक्तिमतः ईश्वरस्य मान्यताविषये सन्देहः, परञ्च प्रत्यक्षं ज्ञानं (प्रमां) तु तेऽपि निर्विरोधं स्वीचक्रुः। यद्यपि तत्रान्येषां प्रमाणानां मान्यता नास्ति, तथापि प्रत्यक्षप्रमाणं, प्रत्यक्षप्रमां (प्रत्यक्षज्ञानं) तेऽपि निःसन्देहं मन्यन्ते। अतः प्रत्यक्षं हि सार्वभौमं, सर्वमान्यं, लोके शास्त्रेषु च गृहीतचरं प्रमाणं विद्यते। ततः प्रत्यक्षप्रमा (ज्ञानम्) तु स्वत एव सिद्ध्यति। अत एव च कथ्यते प्रायः लोके ''प्रत्यक्षे किं प्रमाणम्'' यद् वस्तु चक्षुषोः समक्षे भवति, किं वा चक्षुषोः समक्षे च या घटना घटिता, तस्या घटनायाः (वस्तुनः) प्रत्यक्षत्वात्, सत्यतामापादयितुं प्रमाणान्तरस्य न किमप्यावश्यकं लोके भवति। अनेनायाति यत् प्रत्यक्षं हि दर्शनशास्त्रे तादृशः पदार्थः तत्त्वं वा विद्यते यस्य प्रामाणिकतायाः कृते न



तत्त्वान्तरमपेक्षते। शास्त्रेषु अन्यानि च यानि अनुमानादीनि प्रमाणानि, तेषां कृतेऽपि प्रत्यक्षं प्रथमम् अपेक्षते। तथाहि—अनुमानं हि अनुमितिकरणम् (अतिशयकारणम्) अनुमानम्, स्वीक्रियते।[1] परामर्शजन्यं ज्ञानम् अनुमितिः[2], किं व्याप्तिविशिष्टपक्षधर्मता-ज्ञानम् परामर्शः[3] अनुमानम्। साहचर्य-नियमः व्याप्तिः कथ्यते, अर्थात् कस्यापि हेतोः कार्येण सह अन्वयेन व्यतिरेकेण सम्बन्ध-ज्ञानेन, उभयोः व्याप्ति-ज्ञानं जायते। अन्वयः व्यतिरेकश्च, यत्सत्त्वे यत्सत्त्वम् (अन्वयः) यदभावे यदभावश्च व्यतिरेकः। यथा यत्र यत्र धूमः, तत्र तत्र वह्निः भवति इति। अर्थात् यथा द्वयोः सहभावः (वह्नेः धूमस्य सहभावः) अन्वय-व्याप्तिः।[4] एवमेव—यत्र-यत्र वह्नेः अभावः, तत्र-तत्र धूमस्य अपि अभावः, इति व्यतिरेकव्याप्तिः कथ्यते। एवम् अन्वयेन व्यतिरेकिणा ज्ञानेन च द्वयोः (अग्नेः धूमस्य च) व्याप्तिज्ञानं (सहभावः) जायते। अत एवोक्तम्—साहचर्यनियमो व्याप्तिः। परमिदमपि व्याप्ति-ज्ञानं प्रत्यक्षादेव विधीयते। तेन स्पष्टं विद्यते, यद् अनुमानमपि विज्ञाः प्रत्यक्षज्ञानात् नैव कर्तुं शक्यन्ते। ततः स्पष्टं यद्, प्रत्यक्ष-मूलकं हि अनुमानम्। अत एवोक्तम् अनु=पश्चात्, ज्ञानम्=अनुमानम् इति। **उपमान—प्रमाणस्य** मूलेऽपि प्रत्यक्षमेव—यथा-'गोः सदृशः गवयः' इति उपमानस्य उदाहरणम्। अत्रापि कश्चित् नागरिकः प्रथमं गोः प्रत्यक्षं करोति। ततः एव वनं गत्वा, गोः सदृशं पशुं विलोक्य अयं प्राणी, गोः सदृशः, अतः गवयः विद्यते। अत्रापि प्रथमं प्रत्यक्षम्।[5] एवम्

१ तर्कसंग्रहः अनुमानखण्डम् २ वही ३ वही
४ तत्रैव, ५ संज्ञा-संज्ञिसम्बन्धज्ञानमुपमिति तत्करणं सदृशज्ञानम्, तत्रैव

उपमान-अर्थापत्त्यादीनामन्येषां समेषां प्रमाणानां मूले प्रत्यक्षमेव विद्यते। तेन प्रत्यक्षमूलकानि एव सर्वप्रमाणानि भवन्तीत्यत्र नास्ति विचिकित्सा।प रंप्रत्यक्षस्यम ान्यतायाा वषयेए कत्वेऽपि,त स्य प्रक्रिया-विषये नैक्यं दर्शनशास्त्रे। दर्शनानि च चार्वाक-सांख्य-योग-न्याय-वैशेषिक-मीमांसा-वेदान्तादिभेदेन नैकानि, परन्तु एतेषु दर्शनेषु दार्शनिकेषु च प्रत्यक्षस्य लक्षणे, प्रक्रियायां च नैक्यं दृश्यते। स्वीकृतेऽपि प्रत्यक्षे, किम् अस्ति स्वरूपं तस्य, कथञ्च कस्याऽपि अर्थस्य=(वस्तुनः) प्रत्यक्षं जायते, कश्च तस्य विधिः (प्रक्रिया) इति, विषयेऽस्मिन् समानेऽपि उद्देश्ये, प्रक्रिया-भेदेन भेदो दृश्यते। ततोऽत्र प्रथमं सांख्य-दर्शनस्य प्रत्यक्ष-प्रक्रियामधिकृत्य लिख्यते-

**सांख्यदर्शनम्-**

सांख्यदर्शनं बाह्यार्थवादि दर्शनं नास्ति। बाह्यार्थवादि-दर्शनस्य तात्पर्यां वद्यतेय द्यत्रव स्तुभ वतित स्मिन्स् थानेए वत स्यप्रत्यक्षं भवति। यथा—भूतले घटो विद्यते, न्यायदर्शनानुसारं भूतले एव तस्य प्रत्यक्षं भवति। यद्यपि दर्शनशास्त्रे चक्षुः श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि सन्ति, परं यस्य प्रत्यक्षं येन इन्द्रियेण विधीयते, तस्य इन्द्रियस्यैव वस्तुना सह प्रथमं सन्निकर्षः (सम्बन्धः) जायते, ततश्च इन्द्रियस्य-अर्थस्य सन्निकर्षेण (सम्बन्धेन) तस्मिन् स्थाने एव वस्तुनः (अर्थस्य)प्रत्यक्षं भवति। तत्रापि प्रत्यक्षे, इन्द्रियम्, मनः आदिकारणं भवति। इन्द्रियेण मनसः संयोगोऽपि नितान्तम् आवश्यकं भवति प्रत्यक्षे। यथा—भूतले घटो विद्यते, अत्र भूतले एव घटस्य तस्य प्रत्यक्षम् चक्षुः इन्द्रियेन विधीयते इति। नैयायिकानां न्यायदर्शने बाह्यप्रत्यक्षं



भवति। परन्तु सांख्यदर्शने इतः भिन्ना प्रक्रिया (विधिः) अस्ति—नात्र बाह्यप्रत्यक्षं भवति, परन्तु आन्तरिकं प्रत्यक्षं जायते। सांख्यदर्शने यत्र वस्तु विद्यमानं भवति, तत्रैव इन्द्रिय-वस्तुनोः सन्निकर्ष=सम्बन्धमात्रेण पदार्थस्य प्रत्यक्षं न जायते, अपितु वस्तु बुद्धि-वृत्तिद्वारेण प्रथमं पुरुषस्य सन्निधेः नीयते, तदनन्तरं बुद्धिवृत्ति-आकारयुतस्य वस्तुनः प्रतिबिम्बं पुरुषे पतति, तदा वस्तुनः प्रत्यक्षं जायते। पुरुषः न बाह्य- पदार्थः अपितु आन्तरिकं तत्त्वं विद्यते। ततः इदं दर्शनम् आभ्यन्तरं प्रत्यक्षवादि विद्यते। दर्शनस्यास्य विशिष्टे द्वे एव तत्त्वे स्तः पुरुषः प्रकृतिश्च, तयोः संयोगात् महत् तत्त्वं प्रथमं जायते महत् एव बुद्धिः विद्यते प्रत्यक्षे बुद्धेरेवप्राधान्यम्-बुद्धिरेवस वार्न्ा वषयान्,स ववृत्तिभिःप ुरुषाय प्रयच्छति, अतः बुद्धि-वृत्तयः एव विशेषतः प्रत्यक्षे कारणं भवन्ति इति। ततो दर्शनस्याऽस्य प्रत्यक्ष-प्रक्रिया भिन्नाऽस्ति अन्येभ्यः दर्शनेभ्यः।

**प्रत्यक्षस्य लक्षणम्—**

सांख्ये प्रत्यक्षस्य विशेषणादि-रहितं सरलं सूक्ष्मं ग्राह्यं च लक्षणं विद्यते- तस्य प्रत्यक्षस्य लक्षणं कुर्वता सांख्यसूत्रेऽपि प्रतिपादितम् **'यत् सम्बन्धं सत् तदाकारोलेखि विज्ञानं तत् प्रत्यक्षम्'**[६]। अत्र **'तदाकारो लेखि'** इति विशेषणं दत्तम्, अस्य तात्पर्यं विद्यते यत्-न केवलम् इन्द्रिय-संयोगमात्रेण कस्यापि वस्तुनः प्रत्यक्षं जायते, यथा न्याय-दर्शने भवति, परञ्च सांख्ये कस्यापि वस्तुनः प्रत्यक्षस्यकृते विशेषः नियमः विद्यते। स एव नियमः सांख्ये प्रत्यक्ष-प्रक्रिया

६ सांख्यसूत्रम्, १,८९, सांख्यप्रवचनभाष्यमपि द्र.

कथ्यते-अतः प्रत्यक्षस्य लक्षणं तत्र सांख्यकारिकायामित्थं कृतं विद्यते- '**प्रतिविषयाध्यवसायो दृष्टम्**'[७] अर्थश्चास्याः कारिकायाः विषयं विषयं प्रति प्रतिविषयम्, तस्य 'अध्यवसायः' अध्यवसीयते इति अध्यवसायः, अध्यवसायः -इत्यस्य तात्पर्यम्, अर्थस्य-आकारस्य-आकारता अर्थात् तदाकाराऽऽकारिता इति, अर्थस्य ग्रहणम् एव कस्यापि वस्तुनः दृष्टम्= प्रत्यक्षम् मन्यते अत्र अध्यवसाय-पदेनैव सन्निकर्षस्य=संयोग-सम्बन्धस्य वैशिष्ट्यं प्रतिपाद्यते। इति तु सर्वे आमनन्ति यत् कस्यापि वस्तुनः प्रत्यक्षस्य कृते वस्तुना सह इन्द्रिय- संयोगादि-सम्बन्धः नितान्तमावश्यकं भवति। यतो हि न हि इन्द्रियाणि अप्राप्यवस्तु प्रकाशकानि भवन्ति। ततः यावद् कस्याऽपि वस्तुनः (अर्थस्य) चक्षुरादिना केनापि इन्द्रियेण सह साक्षात् सम्बन्धः न भवति, न तावद् इन्द्रियं स्वकीयं विषयमपि प्रकाशयितुं शक्नोति। परञ्च सांख्ये सम्बन्ध-शब्देन केवलं संयोगः अर्थात् इन्द्रिय– अर्थयोश्च सम्बन्ध-मात्रं नैव मन्यते, अपितु इन्द्रियेण सह विषयस्य तदाकारकारिताऽपि तत्र नितान्तमावश्यकं मन्यते। सांख्ये कस्यापि वस्तुनः (अर्थस्य) प्रत्यक्षे वस्तु बुद्धि-वृत्ति-आकारवत् भवति। तदनन्तरमेव प्रत्यक्षं जायते। अत एवोक्तं सांख्यकारिकायाम् ''**प्रतिविषयाध्यवसायो दृष्टम्**''। अत्र वस्तुनः **अध्यवसाय** एव दृष्टम्, प्रत्यक्षमुक्तम्। तात्पर्यञ्च तस्येत्थं भवति–कस्यापि वस्तुनः (अर्थस्य) प्रत्यक्षे प्रथमं वस्तुनः बुद्ध्या सह तादात्म्यात्, तमोगुणस्य न्यूनता सत्त्वगुणस्य वृद्धिः जायते, सत्त्वगुणस्य वृद्धेरनन्तरमेव बुद्धिवृत्तयः अर्थाकाराऽऽकारा भवन्ति।

७ सां. प्र. सांख्यकारिका -५ ८ सां. का.



वस्त्वाकाराऽऽकारायाः (अर्थाकाराकारायाः) बुद्धेः चेतन-पुरुषे प्रतिबिम्बं, पतति। पतिते च प्रतिबिम्बे अर्थाकाराकारवत्या बुद्धेः पुरुषे प्रतिबिम्बे तदानीं चेतनः पुरुषः बुद्धिवृत्ति-व्यापृतस्य वस्तुनः आकारवान्, भवति अनन्तरम् अर्थ-आकारवान् पुरुषः तदानीं तथैव परिलक्ष्यते।[९] यथा कस्मिंश्चित् स्थाने स्थितस्य रक्तस्य जपाकुसुमस्य पतितेन प्रतिबिम्बेन शुद्धः श्वेतः स्फटिकः श्वेतः सन् अपि रक्तः परिलक्ष्यते। यद्यपि स्फटिकस्तु तदानीं पूर्ववत् स्वच्छ : एव भवति, परञ्च जपाकुसुमस्य प्रतिबिम्बेन, स्वच्छ ोऽपि रक्तः इव दृश्यते। तत्र जपाकुसुमस्य लालिम्नः केवलं स्फटिकेन सम्बन्धमात्रं जायते, न हि जपाकुसुमस्य लालिम्ना स्फटिकः रक्तो भवति, न च उभयोः संयोगोऽपि भवति, केवलं जपाकुसुमस्य लालिम्नः मात्रेण रक्तिम्नस्तत्राभासमात्रं जायते।[१०] अपाकृते च जपाकुसुमे, स्फटिकस्तु पूर्ववदेव भासते, न तत्र किञ्चित् परिवर्तनं नापि च परिवर्धनं भवति।[११] वस्तुतः पुरुषस्तु सत्त्वादिगुणाभावात्, सुख-दुःखादिरहितः शुद्धस्वरूपो विद्यते। बुद्धि-वृत्तिभिः संयुक्तः सन्नेव अज्ञानस्य तथा बुद्धेःधर्मान् आत्मनः एव धर्मान् मन्यमानः, आत्मानं भोक्ता कर्ता च मन्यते। इदमेव सांख्ये प्रत्यक्षं, न तु केवलम् इन्द्रियार्थ-संयोग-मात्रेणैव प्रत्यक्षं जायते इति।

यथा पूर्वमेव प्रतिपादितं यत् सांख्ये प्रत्यक्ष-विषये बुद्धि-वृत्तीनां सर्वाधिकं महत्त्वं विद्यते। बुद्धि-वृत्तिमन्तरा तत्र प्रत्यक्षस्य

९ सां. प्र. सांख्यकारिका -५तत्त्वकौमुदी टीका.

१० पातञ्जलयोगदर्शनम्. ११ तत्रैव, तदाद्रष्टुः स्वरूपे अवस्थानम्, सूत्र. १.३.

संभावनमपि कर्तुं न शक्यते, अतः परञ्च बुद्धिवृत्तीनां विषये नैक्यं सांख्याचार्येषु, तथाहि—तत्र केवलमिन्द्रियार्थसन्निकर्षजन्यमेव ज्ञानम् एव न प्रत्यक्षं स्वीक्रियते, अपि तु बुद्धिवृत्तयः इन्द्रिय-प्रणालिकया वस्तुनः समीपे गत्वा वस्तुनः आकारं गृह्णन्ति, अनन्तरञ्च वस्त्वाकाराऽऽकारा च सा बुद्धिः जायते। तदनन्तरं सविषयाया बुद्धेः पुरुषे प्रतिबिम्बम् पतति, ततश्च प्रत्यक्षं जायते। अतस्तत्र केवलं बुद्धिवृत्तिरेव प्रमाणम् इति मन्यन्ते।[१२] इयं बुद्धिवृत्तिः सांख्यशास्त्रे नेन्द्रियांशरूपा न च गुणरूपा। कस्यापि वस्तुनः प्रत्यक्षस्य समये इयम् एव वृत्तिः सम्बन्धितार्थमभिसर्पति।[१३] यद्यपि विज्ञानभिक्षुः द्रव्यरूपां वृत्तिं स्वीकुर्वन् दृश्यते, परन्त्र घटादिवद्, अपितु वृत्तिः जीव-बल-प्राण धारण या इति व्युत्पत्या, यथा कश्चित् स्ववृत्ति-द्वारेण जीवति, तथैव बुद्धिः द्रव्यरूपया वृत्या जीवति।[१४] सांख्ये कानिचिदेतादृंशि स्थलान्यपि प्राप्यन्ते, यत्रेन्द्रियाणि वृत्तित्वेनस्वीक्रियन्ते,त तश्चेन्द्रियाणि प्रमाणम् इति मन्यते। तेषां मते इन्द्रियाण्येव विषय-संयुक्तानि भवन्ति विषयाऽऽकारा विषयाकारावन्ति च जायन्ते इति। तदेव च प्रत्यक्षं मन्यते।[१५] ईश्वरकृष्ण: विषय-सम्बन्धितेन्द्रियाश्रितं बुद्धिव्यापारं ज्ञानं वा प्रत्यक्ष-प्रमाणं मन्यते। माठरः विषयेण संयुक्तेन्द्रिय-व्यापारेणाश्रितं निश्चयात्मकं ज्ञानम् प्रत्यक्षं प्रमाणम् अङ्गीचकार। जयमङ्गलाकारः इन्द्रिय-द्वारेण विशेषावधारणप्रधानां बुद्धिमेव

१२. यत्सम्बन्धं सत् तदाकारोलेखि विज्ञानं तत्प्रत्यक्षम्, सां. सू. १, ८९, सां. प्र. भाष्यम्।
१३ भागगुणाभ्यां तत्त्वान्तरं वृत्तिः, सम्बन्धार्थं सर्पतीति, सां. सू. ५, १०७, सां. प्र. भाष्यम्।
१४. तत्र यथाद्रव्यरूपया वृत्या बुद्धिः जीवति, सां. सू., ५, १०८ तथा भाष्यम्।



प्रत्यक्षममन्यत। वाचस्पतिमिश्रः वृत्तिमेव सन्निकर्षं स्वीकुर्वन् विषयं विषयं प्रति प्रतिविषयम्, एवं सति तत्र सन्निकर्षः स्यात्, ततश्च तस्मिन् जायमानोऽध्यवसाय एव प्रत्यक्षम् इत्यवोचत्। तन्मते इन्द्रियाणां विषयाकारेण जायमानः परिणाम एव सन्निकर्षो भवति, न तु केवलमिन्द्रिय-विषय-संयोगमात्रम्। तेन निश्चयः अध्यवसायश्चेत्यनर्थान्तरम्। अध्यवसायश्च तमोऽभिभवानन्तरं यत् सत्त्वगुणस्याऽऽधिक्यं जायते तदेव। अध्यवसायःवृत्तिः, इदं वृत्तिरूपं ज्ञानम् एव प्रत्यक्षं तदेव प्रत्यक्षं प्रमाणम्।[१६]

विज्ञानभिक्षुरपि एतदेव स्वीकरोति, यस्य कस्यापि वस्तुनः प्रत्यक्षसमये वृत्तिरेव सम्बन्धितार्थं प्रत्यभिगच्छति, तदनन्तरञ्च विषयस्याकारा च भवति अर्थात् यथा वस्तुनः आकारो भवति तदाकारवती जायते। तत्स्वरूपा इयं वृत्तिरेव सन्निकर्षशब्देन व्यपदिश्यते। सैव वृत्तिः प्रमाणमाख्यायते। सांख्यदर्शने तमसः प्रतिबन्धकेनैव न कस्यापि प्रत्यक्षस्य काले बुद्धितत्त्वस्य संभवः। तमोऽभावे सत्त्वस्य प्राबल्येन वस्तुनः प्रत्यक्षम्, वृत्तेर्वा तदाकारता जायते। बुद्धेर्विषयाकारतैव वृत्तिः, वृत्तिरेव प्रमाणम्। तच्च तमः कुत्रचिद् इन्द्रियार्थयोः सन्निकर्षमात्रेण, कदाचिच्च योगजधर्मेण दूरीक्रियते। ततश्च सत्त्वस्याऽऽधिक्येन तमसोऽभिभवे बुद्धिवृत्तिद्वारेण विषयाकारग्रहणानन्तरंस विषयायाःबुद्धेःपुरुषे यत् प्रतिबिम्बं तदेव प्रत्यक्षम्। अत्र प्रतिबिम्बञ्च बुद्धेरेव परिणामः,त देवप्रतिबिम्बम्एव सन्निकर्षः,न तुन्यायदर्शनवत्

१६. सां. का., ५ तत्त्वकौमुदी।

संयोगमात्रम् एव सन्निकर्षः।[१७]

तदनन्तरं प्रत्यक्षं कथं भवतीति विषयेऽस्मिन्नपि सांख्यशास्त्रस्य विदुषाम् मतद्वयम् अस्ति। तथाहि—

**प्रथमं मतम्—**

सांख्यदर्शने प्रथममतानुसारेण यत्र अर्थः=वस्तु भवति, तत्र इन्द्रिय-प्रणालिकया बुद्धि-वृत्तयः अर्थस्य समीपमुपगच्छन्ति, ततः, यथा कस्मिंश्चित् क्षेत्रे क्षेत्रस्य सेचनार्थं कस्मादपि कूपात् प्रणालिकया क्षेत्रं प्रति नीयमानं जलं, कुत्रचित् क्षेत्राकारवत् भवति, त्रिभुजं चेत् क्षेत्रं तदा त्रिभुजाऽऽकारं, चतुर्भुजं चेत्, तदा चतुर्भुजाऽऽकारम् भवति, एवमेव सांख्यदर्शनस्य प्रत्यक्ष-प्रक्रियायामपि, इन्द्रिय-प्रणालिकया बुद्धि-वृत्तयः कस्यापि अर्थस्य= वस्तुनः प्रत्यक्ष-काले वस्तुनः समीपं गत्वा तद्-अर्थाकार-आकारवत्यः भवन्ति। यादृशं वस्तु=(अर्थः) भवति तादृशाकारमेव गृह्णन्ति इति। अर्थात् ताः बुद्धि-वृत्तयः, वस्तु-आकार-आकारवत्यः भवन्ति। तथा सति पुनः ताभिरेव इन्द्रियैः क्रमशः बुद्धि-वृत्ति-आकारवान् घटः पुरुष-समीपे नीयते, ततश्च बुद्धि-वृत्ति-युक्तस्य घटस्य प्रतिबिम्बं पुरुषे पतति। तदानीं यद्यपि पुरुषे घटः प्रतिबिम्बरूप एव भवति, परम् अज्ञानतया पुरुषः अहं घटं जानामि इत्यभिमानं करोति-इदमेव हि प्रत्यक्षम् सांख्ये। तथाहि—प्रक्रिया चेत्थं भवति—

१७. इन्द्रियाणां विषयाकारेण परिणाम एव सन्निकर्षः। तथा च परमाण्वाद्याकारेण इन्द्रियाणामभावेन न इन्द्रियस्य सत्सन्निकृष्टमिति भावः। सां. का. ५, हरिरामशुक्लः, सुषमा-व्याख्या। पृ. ३० सांख्यतत्त्वकौमुदी च।



**प्रथमा--प्रक्रिया--(केषाञ्चि न्मते)**




अनया प्रक्रियया बुद्धि-वृत्तयः घटेन सह सन्निकर्षं जनयन्ति। ततश्च बुद्धिवृत्तयः घट-आकारवत्यः भवन्ति। पुनः चक्षुरिन्द्रियं वृति-अवच्छिन्नं(व्याप्तम्)घटं प्रथमं मनसे, मनश्च अहंकाराय, अहंकारश्च बुद्धये ततश्च बुद्धि-वृत्ति-सहितस्य घटस्य प्रतिबिम्बं पुरुषे पतति। तद् एव प्रत्यक्षम्। यावत् पुरुषस्य संयोगः प्रतिबिम्बेन घटेन सह भवति, तावद् एव घटस्य प्रत्यक्षं (प्रतीतिः) जायते।

**द्वितीयं मतम्—**अपगते च प्रतिबिम्बे घटस्य प्रतीतिः (प्रत्यक्षम्) नैव जायते।

केचन पूर्वोक्तां प्रक्रियां न अङ्गीकुर्वन्ति। तेषां मतं विद्यते, यत् न प्रथमं बुद्धि-वृत्तयः इन्द्रिय-प्रणालिकया घटस्य समीपे आगत्य तद्-आकारवत्यो भवन्ति, अपितु इन्द्रियाणां वस्तुना सह सन्निकर्षानन्तरम्- (संयोगानन्तरम्) इन्द्रिय- द्वारेणैव घट-आदिकं

वस्तु बुद्धिं प्रति नीयते, (न तु प्रथमं) बुद्धिवृत्तयः इन्द्रिय-प्रणाणिकया वस्तुना सह सन्निकर्षं कृत्वा, वस्तुनः आकारवत्यो भवन्ति। तदनन्तरं व्युत्क्रमेण क्रमशः इन्द्रियाणि घटं, बुद्धिं प्रति नयन्ति, परञ्च इन्द्रियमेव घटं बुद्धिं प्रति नयति-इति। तेषां मते प्रक्रिया इत्थं विद्यते—




अत्र प्रथमं चक्षुषोः घटेन सह संयोगो भवति, चक्षुः तदाकारं (घटाकारम्) सत् घटं मनसे ददाति। मनः तम् घटम् अहंकाराय यच्छति, अहंकारश्च तस्मिन् विषये विचारयति। विचारानन्तरम् बुद्धये समर्पयति। ततश्च बुद्धिवृत्तयः घटाकाराऽऽकारा भवन्ति। अनन्तरं घटाकार-आकारवत्याः बुद्धेः प्रतिबिम्बं पुरुषे पतति। इदं घटाकाराकारायाः बुद्धेः यत् प्रतिबिम्बं पुरुषे पतति इदमेव प्रत्यक्षम् अस्ति।

**प्रत्यक्षस्य प्रक्रिया तथाहि-**

प्रथमम् इन्द्रियस्य वस्तुना सह सन्निकर्षः (सम्बन्धः) जायते।



इन्द्रियं वस्तु मनसे ददाति, मनश्च तत्र संकल्पं विकल्पञ्च करोति। ततो मनोऽप्यहंकाराय प्रयच्छति। अहंकारश्च ममानिष्टायेष्टाय वेति विचार्य बुद्ध्यै समर्पयति। बुद्धिश्च पुरुषाय प्रयच्छति। ततो वस्तुनः प्रत्यक्षम्। एवं कस्यापि वस्तुनः प्रत्यक्षे न केवलम् इन्द्रियाण्येव कारणमपितु तत्र त्रयोदशविधं कारणमङ्गीक्रियते।[18] तच्च मनः बुद्धिः अहंकारः इति त्रिविधमन्तःकरणम्, दशविधञ्च बाह्यम्।[19] बाह्यं करणं केवलं वस्त्वन्तःकरणाभिमुखीकरोति, अतो बहिरिन्द्रियाणि द्वाराण्युच्यन्ते।[20] यथा प्रकोष्ठं प्रविविक्षुः प्रथमं द्वारं गत्वा ततश्च प्रकोष्ठं प्रविशति। एवमेव सर्वाणि प्रत्यक्षात्मकानि वस्तूनि इन्द्रियद्वाराभिमुखीभूयान्तः-करण-प्रकोष्ठं प्रविशन्ति। तत्राऽपि मनोऽहंकारश्च केवलं वस्तु अग्रे नेतुं साहाय्यममाचरतः बुद्ध्यै च प्रयच्छतः, बुद्धिरेव पुनः प्रकोष्ठस्थिताय पुरुषाय यच्छति, तेन बुद्धिरेव द्वारि अर्थात् प्रधानम्।[21] ततश्च विषय-सहितायाः बुद्धेः पुरुषे प्रतिबिम्बं भासते। अथवा सविषयया बुद्ध्या चेतनस्य पुरुषस्य संयोगो भवति। तेन विषयाकारेण भासमानाः सर्वेऽपि पदार्थाः चेतन-पुरुषस्य सम्पर्केण तथैव प्रकाशन्ते यथा चलचित्र-चित्रेषु विद्यमानानामपि नायक-नायकादीनां निर्जीवानि चित्राणि विद्युत्प्रकाशेन प्राकाश्यमुपयान्ति, सर्वविध-कार्याणि कुर्वन्ति च दृश्यन्ते। तावदेव तानि सर्वाणि चित्राणि दृष्टिपथमायान्ति, यावत्तत्र विद्युत्प्रकाशस्य संयोगो भवति, प्रकाशाभावे विद्यमानेष्वपि चित्रेषु न किमपि चक्षुर्भ्यां विलोक्यते। एवमेव सांख्येऽपि पुरुषः सर्वेषां पुरोविद्यमानानामविद्यमानानां वा विषयाणां प्रत्यक्षं विदधाति इति मान्यता। प्रत्यक्षे कुत्रचिदिन्द्रियाणां करणत्वम्,

१८ सां.का., ३२ १९. सां.द.सू. २, ३८, सां.का. ३३
२०. सां.का. ३५ २१. तत्रैव, का., ३९ २२. सां.का., ३३

कुत्रचिच्चान्तःकरणमात्रस्य। दृष्टेषु पदार्थेषु इन्द्रियाणामदृष्टेषु स्वप्नादिषु च केवलमन्तःकरणस्यैव करणत्वम्। इन्द्रियाणि केवलं वर्तमानकालिकानां पदार्थानां ज्ञानं कर्तुं प्रभवन्ति, अन्तःकरणञ्च त्रैकालिकपदार्थानामपि।[२२] चतुर्विधस्य इन्द्रियाद्यन्तःकरणस्य दृष्टपदार्थेषु कदाचिद् युगपद् व्यापारो भवति, कदाचित् तु क्रमशः। अदृष्टपदार्थेषु अन्तःकरणस्यैव व्यापारो भवति नत्विन्द्रियाणामपि।[२३] यद्यपि वेदान्तेऽपि प्रत्यक्षस्य वृत्तिरूपैव प्रक्रिया, परं तत्र वृत्तिरूपं ज्ञानं मनसो धर्मः। तत्राऽन्तःकरणस्येन्द्रियेण संयोगस्तस्य च विषयेण सह संयोगो मन्यते। एवमेव तत्रान्तःकरणस्येन्द्रियप्रणालिकया विषय-देशाभिसर्पणं मन्यते, ततो विषयाकारा-आकारा वृत्तिः जायते। ततो विषयगताऽज्ञानाऽऽवरणध्वंसः, आवरणध्वंसे जाते वृत्तौ चेतनस्य प्रतिबिम्बनम्। अतस्तन्मते विषयगत-स्थल एव प्रत्यक्षं जायते।[२४] इदं हि प्रत्यक्षं षड्विधं घ्राणजादिभेदात्। यथा चक्षुर्भ्यां जातं चाक्षुषम्, घ्राणेन जातं घ्राणजं प्रभृति। मनसा जातं मानसम् इति षड्विधमपि तत् (१) निर्विकल्पकम् (२) सविकल्पकम् द्विविधं भवति।

**निर्विकल्पकम् -**

प्रकारतादिविषयताविरहितं ज्ञानं निर्विकल्पकम्। निष्प्रकारकम्= प्रकारः= विशेषणम्, ततो निष्प्रकारकं विशेषणादि-रहितं ज्ञानं निर्विकल्पकम्, कस्यापि वस्तुनः नामजाति-आदि-रहितं यद् ज्ञानं भवति तत् निर्विकल्पकं कथ्यते। तद्धि शब्देनाव्यपदेश्यम् =अकथनीयं भवति। तदानीं केवलमस्ति किञ्चि देतादृक् एव ज्ञानं जायते, न तु किमिदं किन्नामात्मकं किंरूपञ्चेति। अस्ति किञ्चि द्

२३. तत्रैव, ३०    २४. वेदान्तपरिभाषा, प्रथमः परिच्छेदः।



एतादृशम् एव ज्ञानं प्रथमे क्षणे जायते। तद् हि नाम, जाति, आकार-प्रकार रहितं भवति।

**सविकल्पकम्-**

वस्तुनो नामजात्यादियुक्तं ज्ञानं सविकल्पकम्। सप्रकारकं ज्ञानम् सविकल्पकम्=प्रकारः=विशेषेण तेन युक्तं ज्ञानम् सविकल्पकम्— यथा-घटोऽयम्, नीलघटोऽयम् लघुः घटोऽयम् उरगोऽयम् स्थाणुर् अयम् इत्यादि ज्ञानं सविकल्पकं भवति। निर्विकल्पक-सविकल्पकयोर्मध्ये जयमङ्गलाकारः सविकल्पकमेव ज्ञानं प्रामाणिकं मनुते। अनिरुद्धः निर्विकल्पकं सविकल्पकमुभयविधमेव प्रामाणिकं मन्यते। एवं इन्द्रियजन्यं निर्विकल्पकं मनोजन्यञ्च सविकल्पकं स्वीकुरुते। आचार्यविज्ञानभिक्षुरपि प्रत्यक्षं निर्विकल्पकं सविकल्पकमिति चोभयविधं स्वीचकार। परम् उभयविधमेवेन्द्रिय-जन्यममन्यत, उभयोरेव च प्रामाण्यमध्यगच्छत्।[२५] यद्यपि केचन विद्वांसः प्रत्यक्षस्य निर्विकल्पक-सविकल्पकभेदद्वयं सांख्य-सिद्धान्तविरुद्धं निगदन्ति, परं नैतद् युक्तियुक्तम्। तदत्र केचिद् आचक्षीरन्- सर्वविधं ज्ञानं पुरुषजन्यमेव सविषयायाः बुद्धेः पुरुषे प्रतिबिम्बस्य स्वीकारात्, तदा पौरुषेयमिदं ज्ञानं कथन्नाम निर्विकल्पकं स्यात्। पुरुषे सूक्ष्मातिसूक्ष्म-वस्तुग्रहणशक्तेः विद्यमानात् स्वीकाराच् च इति, तन्न, तथात्वेन शुक्तिशकलादौ रजतादेः ज्ञानस्य, रज्जौ उरगज्ञानस्यासंभवाद् भ्रान्त-ज्ञानस्याऽप्यसंभवात्। तन्मतेऽपि भ्रान्तज्ञानस्य च स्वीकारात्, स्वसिद्धान्तविरुद्धदोषोत्पत्तेश्च संभवाद् तन्न भवितुमर्हति इति। एवं संक्षेपतः प्रत्यक्षस्य प्रक्रिया प्रादर्शि सांख्ये।

२५. सां.द., सूत्र २, ३२; तत्र सांख्यप्र. भाष्यम्।

ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कौ-४;१

# गड्डलिकाप्रवाहः

**सत्यव्रतवर्मा,**
**पूर्व प्राचार्य, मानद प्रोफैसर**
७/३४, पुरानी आबादी, नामदेव फ्लोर मिल के पास,
श्रीगंगानगर-३३५००१

'साहित्यमितिश ाब्दोा नश्शेषभङ्ग्याय त्कृ तिजातम्अ भिधत्ते, तत्सकलं संस्कृतवाङ्मये विद्यते', विण्टरनिट्ज़महाभागस्यैतद् वचस्तद्वाङ्मयस्यामिताम् ऋद्धिं विस्तृतिं च सुतरां प्रख्यापयति। निखिले विश्व एतदेवेदृशं साहित्यमस्ति यस्मिन् वेदोपनिषदादयः परमपावना धर्मग्रन्थाः, कामसूत्र-रतिरहस्यप्रभृतयश्च कामशास्त्रीयाः कृतयः सध्रीचीनं वर्तन्ते, समे च ते समामर्हणामर्हन्ति। प्रहेलिकालोकोक्तीनामपि तत्रासद्भावो नास्ति या मिथ्यैव लोकसाहित्यस्याङ्गभूता इत्यवगीयन्ते। न्याय इति नाम्ना प्रथितास्ता अल्पिष्ठा उक्तयोऽपि तत्र सगौरवं विराजन्ते या भावगाम्भीर्याद् व्यवहारेप देप देल ोकमुपकुर्वन्ति।न् यायनिचयोा हप्ाचांप्ज्ञायाः शेवधिरस्ति। ऋषिपुङ्गवैः समाधिकल्पे गभीरचिन्तने यत् शाश्वतं सत्यं साक्षात्कृतं, जीवनसमरे च ये मधुरकषाया अनुभवा अधिगतास्ते पूर्वसूरिभिर्, न्यायघटिकासु महता श्रमेण सञ्चिताः। निहितार्थगौरवाद् अमितप्रभावाच्च ते शास्त्रविमर्शं द्रढयितुं तत्कृतं कार्कश्यं वा लघयितुं साहित्येऽसकृत् प्रयुज्यमाना दृश्यन्ते। ते हि न्याया व्याकरण-दर्शन-काव्यशास्त्रादि-ग्रन्थेषु तद्भाष्येषु च प्रायेण तद्गतान् गूढविषयान् विशदवाचा प्रकटयितुमुपकरणीभवन्ति। कर्नलजैकबादयः केचिन्



न्यायकोविदास् तस्य-तस्य न्यायस्य प्रभवं तात्पर्यं पूर्वाचार्यैश्च कृतं तद्विमर्शम् अवगाहितुं साभिनिवेशं प्रयतितवन्तः।[१] केचन साम्प्रतिकाः कोषा विमर्शाश्चापि तेषां प्रकृतिं हार्दं च विवरीतुं नः साचिव्यं (साहाय्यं) कुर्वन्ति।

विचार्यमाणं गहनं विषयं विशदयितुं रुचिरतां च तमापादयितुं देहलीदीप-स्थूणा-खनन-दुर्जनतोष-स्थालीपुलाक-घुणाक्षर-काकदन्त-गवेषण-प्रभृतयः केचन न्यायाः कामं सुधीभिः पौनःपुन्येन प्रयुक्ताः सन्ति परं केचन न्याया ये विरलमेव दृष्टिपथमवतरन्ति। तेषु गड्डलिकाप्रवाहन्यायः प्राधान्यं भजते। अयं त्रिकृत्व एव साहित्ये प्रयुक्त इति भणन्ति विज्ञाः। सत्यमेष अभिनवगुप्त-विश्वनाथाभ्यां स्वकृतिषूपात्तः परमस्य सर्वात्मना साभिप्रायः प्रयोगो मम्मटकृते काव्यप्रकाशे लभ्यते, यमवलम्ब्य कैश्चिट् टीकाकारैः किमपि वाचस्पत्यं व्यतानि। इदं चात्रावधेयं यत्काव्यप्रकाशे साहित्यदर्पणे च 'गड्डलिका' शब्द उररीकृतः परं तट्टीकाकृद्भिः प्रायेण गड्डरिकाशब्दोऽभ्युपगतः, यः 'रलयोरभेदः' इति न्यायात् गड्डलिकातो न मनागपि भिद्यते।

काव्यशास्त्रालंकारभूते काव्यप्रकाशे गुणालंकारयोर्भेदं विवरीतुकामो मम्मटो ऽष्टमोल्लासेऽत्र विषये प्राक्तनं दर्शनम् उपन्यस्तवान्। तदनुसारेण लौकिकगुणालंकारयोर्भेदः स्वयं सिद्धो न च विप्रतिपत्तिं सहते। हारादयोऽलंकाराः शरीरे संयोगसम्बन्धेन तिष्ठन्ति परं शौर्यादयो गुणास्तत्र समवायसम्बन्धेन वर्तन्ते। काव्य-गुणालंकारयोरेतादृशो भेदः कल्पयितुं न शक्यते उभयोस्तत्र समवाय-

१. लौकिकन्यायाञ्जलिः, ए हैण्डफुल ऑफ पापुलर मैक्सिम्ज़, निराजना प्रकाशकाः पुस्तकविक्रेतारश्च, देहली, १९८३

वृत्त्या विद्यमानत्वात्। तयोरभेदं न्यक्कृत्य तत्र भेदाभ्युपगतिर् गड्डलिकाप्रवाह इवान्धानुकरणमेव। 'समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादयः इत्यस्तु गुणालंकाराणां भेदः, ओजः-प्रभृतीनाम् अनुप्रासादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषां भेदः'[२]। मम्मटेनेदम् उद्धरणं भामहकृत-काव्यालंकारस्य उद्भटविरचिताया भामहविवरणमित्याख्यायाष्टीकाया यथावद् गृहीतमिति काव्यप्रकाशभाष्यकारः स्वनामधन्या आचार्य-विश्वेश्वरमहाभागाः[३]। एवं सति सप्रत्ययम् अभिधातुं शक्यते यद् गड्डलिकाप्रवाह इति न्यायः प्रथमतयोद्भटेन नवमशताब्द्यां स्वीये विवरणे प्रयुक्तः। अथ चेदिदं भामहविवरणाच्छब्दशो नोपात्तं मम्मटेन च तस्य सारः स्वशब्दैरत्र न्यस्तस् तदपि न्यायस्यास्य व्याख्याने कोऽप्यन्तरायो न जायते।

काव्यप्रकाशस्य 'काव्यप्रदीपः' इत्याख्यायां टीकायां टीकाकृद् गोविन्दो न्यायस्य हार्दमेवं प्राख्यापयत्: 'तस्मात्तयोर्भेदाभिधानं गड्डलिकाप्रवाहन्यायेन। तथाहि गड्डलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति इतरास्तु विनैव निमित्तविचारं तामनुगच्छन्ति तथा केनाप्यालंकारिकेण गुणालंकारौ केनचिदभिप्रायेण भिन्नतायोक्तौ इतरे तु हेतुविचारं विनैव तदनुसारेण तद्भेदं वदन्तीति तदसम्यग्वेदितव्यम्'[४]। अयमस्य भावः। यथैका मैषी कथंचिद् कस्यांचिद् दिशि प्रतिष्ठतेऽन्या मेष्योऽप्यविचार्यैव तामनुप्रतिष्ठन्ते,

२. काव्यप्रकाशः, व्याख्याकार आचार्यविश्वेश्वरः, काशी, १९६०, ८/६७ इत्यत्र वृत्तिः, पृः ३८४.

३. काव्यप्रकाशः पूर्वनिर्दिष्टः, पृ. ३७८.

४. काव्यप्रदीपः काव्यमाला २४ (पुनर्मुद्रणम्), वाराणसी, ८/२, पृ. २७८.



तथैवातीते केनापि सकारणमकारणं वा गुणालंकरयोर्भेदः प्रकाशितः स्यात्, परवर्तिनः काव्याचार्यास् तद्वचः प्रमाणं मन्यमाना गुणालंकारभेदंच यथावद् अभ्युपागच्छन्। इदं हि तद् यद् गड्डलिकाप्रवाह उच्यते।

काव्यप्रकाशस्येतरे टीकाकाराः प्रायेणात्र विषये गोविन्दमतमेव पुनरावर्तयन् तस्य सारं वा तत्तुल्यशब्दैर् उपास्थापयन्। गड्डलिकाप्रवाहमाभाण कं मन्यमानेन श्रीविद्याचक्रवर्तिनाऽस्य व्याख्याने स्वीये भाष्ये यदुक्तं तद् गोविन्दमतेनाऽनल्पं साम्यं बिभर्ति-गड्डरिकाप्रवाहेण बर्करप्रयाणन्यायेन। एकस्यां 'गड्डरिकायाम् अर्थपर्यालोचनं विनैव पुरः प्रयातायां सर्वैव पंक्तिस्तमेव पन्थानं प्रमाणीकृत्य प्रवर्तते। प्रकृतेऽप्येतद् एवाभाणकम् आयातम्'[५]। श्रीवत्सलाञ्छ नश्च प्रथमं गड्डलिकाप्रवाहम् 'अनुपपन्नं वच' आह यदुपजीव्यअ भेदेऽपिभ ेदःक ल्प्यतेस च प ूर्वेषांग ौरवाद्ग ृह्यते। तस्या परं व्याख्यानं लघु सदपि गोविन्द वचसो हार्दमेव व्यनक्तिः यद्वा गड्डलिका मेषी अविच्छेदेन तदनुगमनं प्रवाहः। अकारणमेव मेषीयूथेन मेष्यनुगमनम् इति पिण्डितोऽर्थः।

एषां विद्वत्पुङ्गवानां व्याख्यानैरवदातमिदं यत्तन्मतेऽस्मिन् न्याये गड्डलिका मेषीमभिधत्ते सकलश्च न्यायोऽन्धानुकरणस्य पर्यायोऽस्ति। परं गड्डरिकाशब्दस्तस्य कथितोऽर्थो वा प्राचीनकोषेषु नोपलभ्यते। तत्कथमेषोऽर्थष्टीकाकृद्भिरनुमितः कल्पितो वा? अपि तस्मात्कारणाद् अयमर्थः संशयमापन्नः? तत्सर्वं विचारणामर्हति। इदमत्रज्ञ ेयंय द्ग ड्डरीशब्दः( नत ुग ड्डरिका)ह ेमचन्द्रकृतायां देशीनाममालायां पठितः परं तत्रायं बर्करीमाह न मेषीम्। एतदुपजीव्यैव श्रीविद्याचक्रवर्तिना 'गड्डरिकाप्रवाहेण' इत्यस्य

५. सम्प्रदायप्रकाशिनी, त्रिवेदन्द्रम, १९२६.

'बर्करप्रयाणन्यायेन' इत्यर्थः कृतः स्यात्।

गड्डलिकाप्रवाहः साहित्यदर्पणेऽपि प्रयोगपदवीमवतीर्णः। षष्ठे परिच्छेदे त्रिषष्टिलक्षणानि त्रयस्त्रिंशन्नाट्यालंकारान् च व्यासेन व्यावर्ण्य विश्वनाथ उद्भटवत् सरहस्यं न्यगादीत्-एतानि हि प्रायेणाभिन्नानि मन्यन्ते परं पूर्वसूरीननुकृत्य तान्यत्र पृथक्शो निरूपितानि। 'एषां च लक्षणनाट्यालंकाराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण'[६]।

जीवानन्दविद्यासागरकृतम् अस्य व्याख्यानमल्पं सदपि नानुपपन्नम्: 'गड्डलिकाप्रवाहेण गतानुगतिकन्यायेन इत्यर्थः, प्राचीनोक्तरीत्येतिभावः'[७]। गतानुगतिकं गड्डलिकाप्रवाहस्य भावार्थोऽस्ति नार्थस् तदपि विवृत्यां न्यायस्य तात्पर्यं स्फुटतामितमिति मोदाय। हिन्दीभाष्यकृत् शालग्रामशास्त्री यथात्र वाचस्पत्यं व्यतनोत् तत्र तथ्य-कल्पनयोर् विचित्रः समवायो दृश्यते- 'जैसे बैलगाड़ी लीक लीक चला करती है। जिधर से एक गई है उसी क्षुण्ण मार्ग से अन्य भी जाती है। पीछे जाने वाली प्रायः दूसरा सरल मार्ग निकालने का उद्योग-सम्भव हो तो भी-नहीं करती, उसी प्रकार विशेष विचार न करके परम्परानुसार जो काम किया जाता है उसे गड्डलिकाप्रवाह कहते हैं'[८]। गड्डलिकाशब्दस्य सम्यगर्थम् अजानानः शास्त्रिवर्य्यो: ध्वनिसाम्याद् तस्य बैलगाड़ी (शकटम्) इत्यर्थम् अकार्षीत्। सुतरां सावद्यमिदम्। परं तस्य वाचस्पत्ये न्यायस्य हार्दं यथाकथञ्चिद् आविष्कृतमित्याश्चर्यम्।

६. साहित्यदर्पणः (१-६ परिच्छेदाः), व्याख्याकारः शालग्रामशास्त्री, लखनऊ, वि.सं. १९७८, परिच्छेदः षष्ठः, पृ. २८८.

७. साहित्यदर्पणः, सम्पादकः जीवानन्दविद्यासागरः, कलकत्ता, १९३४, ६.५१५, टीका, पृ. ४९९.

८. साहित्यदर्पणः, सम्पादकः शालग्रामशास्त्री, पूर्वनिर्दिष्टः, पृ. २८८.



प्राचीनकोषेषु गड्डलिका/गड्डरिकाशब्दस्यासद्भावेऽपि टीकाकृतः कथमस्य 'मेषी' इत्यर्थं कर्तुं प्राभवन् इति रहस्यमेव। इदमत्र स्मरणीयं यद् गड्डरिका सुरवाचः शब्दो नास्ति। अयं हि टीका-कृद्भिर्लोकभाषात उपात्तो यत्रायम् अप्रतिहतं प्राचरत्। एतद्दृशायं देशजः शब्दो वर्तते। अन्ये भूयांसः शब्दा इवायं शिष्टसाहित्ये पदमकरोद् उद्भटश्चैनं प्रथमतया नवम्यां शताब्द्यां भामहविवरणे प्रायुंक्त। गड्डरिका/गड्डलिका देशजः शब्दोऽस्तीति सहधर्मिणा 'गडरिया' शब्देन सुतरां पुष्यते। गड्डरिका द्वादशशताब्द्यां 'गड्डरी' इति रूपं दधारेति देशीनाममालातो निर्भ्रान्तं विज्ञायते। ध्वनिसाम्यं बिभ्राणः गडरियाशब्दः आकारेणापि गड्डरीतो नातिदूरे वर्तते। यत्सत्यं गडरियाशब्दो गड्डरिकार्थस्य द्वारभूतोऽस्ति। यतः गड्डरिकाणां पालकः स्वामी वा 'गडरिया' इत्युच्यते, तेन गड्डरिकाया एक एवार्थो भवितुं शक्यते, स चास्ति 'मेषी'। गड्डरिका/गड्डलिकाप्रवाहश्च मेषीणां विशिष्टं स्वभावजं प्रयाणं वक्ति यत्र सकलो यूथ एकामन्धवदनुसरति। तदेव भाषायां 'भेड़चाल' इत्यभिधीयते। गड्डलिका/गड्डरिकाप्रवाहोऽन्धानुकरणस्य पर्यायत्वं भजत इति सुतरामवदातं विमर्शेणानेन।

ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कौ-४;१

# मुखं व्याकरणं स्मृतम् इत्यत्र भर्तृहरिः

**डॉ० कामदेवझा,**
डी.ए.वी. कालेज, नन्योला,
(अम्बाला, हरियाणा)

वेदाङ्गेषु षट्सु व्याकरणं मुख्यमुद्घोषितमिति। व्याक्रियन्ते विविच्यन्ते शब्दा अनेनेति व्याकरणम्। व्याकरणं शब्दशास्त्रं नाम। व्याकरणं विना वाक्शुद्धिरपि असम्भवेति। शुद्धशब्दप्रयोगयोगार्थं व्याकरणादृते नास्ति कश्चनोपायः। अवैयाकरणस्त्वन्ध इत्यपि श्रूयत एव लोके। अत एव शिक्षाकारेण षडङ्गेषु व्याकरणं वेदस्य मुखं प्रोक्तम्।

यथोक्तमत्र- **छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**[1]
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**[2]

मानवशरीरावयवेषु यथा मुखं मुख्यं प्रधानं वेति तथैव किल वेदाङ्गेषु व्याकरणं मुखं, मुख्यं वेति। यथा मुखं सम्भाषणस्याभिव्यक्तेर्वा साधनं तथैवात्र व्याकरणमपि साधुशब्दप्रयोगस्य साधनमिति। महर्षिणा पतञ्जलिना महाभाष्ये वेदाङ्गेषु व्याकरणमेव प्रधानत्वेन निगदितम्। कथितञ्चात्र- ''ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति। प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान्भवति।''[3]

महाभाष्ये व्याकरणस्य रक्षोहागमलघ्वसन्देहाः पञ्च मुख्य-

1. पा. शिक्षा, ४१ 2. तदेव, ४२ 3. महाभाष्यम्, १, पृ. ५-६



प्रयोजनानि प्रतिपादितानि। वेदस्य रक्षार्थम् अध्येयं किल व्याकरणमिति। स्वरस्यापि ज्ञानं व्याकरणादृते असम्भवमेवास्ति। स्वरस्यान्यथोच्चारणेन 'इन्द्रशत्रुर्वर्धस्व' इत्यत्र यथा स्वरस्यापराधात् दुष्प्रभावः सञ्जातः, इत्यनेनावगम्यते यत् व्याकरणं षडङ्गेषु मुख्यमिति। यथोक्तं महाभाष्यकारेणात्र-

**दुष्टःशब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्**[4]**।।**

महाभाष्यस्य पस्पशाह्निके तु व्याकरणस्य प्राधान्यं सर्वथा प्रतिपादितमस्ति। अत एव महाकविना माघेनापि समुद्घोषितं यत् **शब्दविद्येव नो भाति राजनीतिरपस्पशा।**[5] इत्यनेनापि षडङ्गेषु व्याकरणमेव मुख्यं प्रतिभाति। ऋग्वेदेऽपि व्याकरणस्य शब्दशास्त्रस्य वेति महन्महत्त्वं प्रतिपादितमिति। ऋषिभिः तत्रापि भृशमनुभूतं यत् शब्दशास्त्रस्य तत्त्वविदेव शब्दस्यार्थरहस्यमभिजानातीति। अन्यः अवैयाकरणः अन्धस्तु वाग्रहस्यं पश्यन्नपि न पश्यति, शृण्वन्नपि न शृणोति, जानन्नपि न जानातीति। तत्रैव चान्यः वैयाकरणः व्याकरणज्ञानबलेन वाणीमुपासते तस्य कृते वाण्यपि निजस्वरूपमुद्घाटयति विवृणुते वा। यथोक्तं ऋग्वेदे[6]-

**उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः।।**

मन्त्रस्य व्याख्यायामस्यां पतञ्जलिस्त्वत्र[7]- वाङ् नो विवृणुयादात्मानमित्यध्येयं व्याकरणमिति। वैयाकरणस्य तत्त्वज्ञतां प्रतिपादयन्मम्मटस्त्वत्र[8]-बुधैर्वैयाकरणैः प्रधानभूतस्फोट-

४. महाभाष्ये, १, पृ. ७-८ ५. शिशुपालवधम्, २.११२
६. ऋग्वेदः, १०,७१,४ ७. महाभाष्यम्, १, पृ. १४
८. काव्यप्रकाशे, प्रथमोच्छवासः

व्यङ्ग्यस्फोट–व्यञ्ज कस्य शब्दस्य ध्वनिरिति व्यवहार: कृत:। किम्वा सत्यं किम्वा असत्यमित्यपि व्याकरणं व्याकरोतीति। यथोक्तं यजुर्वेदे[९]– दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापति:। अत्रापि व्याकरणस्य महिमा वैशिष्ट्येण प्रतिपादित इति। एक: शब्द: सम्यग् ज्ञात: सुप्रयुक्त: स्वर्गे लोके च कामधुग्भवतीति[१०] इत्यपि सिद्धमेव। आचार्यदण्डिना प्रतिपादितं यत् यदि संसारेऽस्मिन् शब्दज्योतिर्न दीप्येत तत् कृत्स्नं जगदेव नहि अपितु भुवनत्रयमपि अन्धतमसि निमज्जितं स्यादिति। यथोक्तं तेन–

**इदमन्धतम: कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।**[११]

इत्यनेनात्रापि शब्दशास्त्रस्य व्याकरणस्य वेति महत्वमेव व्याख्यातमिति।

आचार्यभर्तृहरिणाऽपिव ेदाङ्गेषुष ट्सु॰याकरणमेवप्राथम्येनो–द्घोषितमिति। तेन किल छन्दसां व्याकरणमेव मुख्यं प्रतिपादितम्। शब्दब्रह्मण: निकटतमं व्याकरणमेव प्रतिपादयति भर्तृहरि:। तपसामप्युत्तमं तप: व्याकरणमिदं प्रोक्तम्। यथोक्तं भर्तृहरिणा–

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तप:।**
**प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधा:।।**[१२]

अर्थप्रवृत्तितत्त्वानां शब्दा: निबन्धनं कारणं वेति। अर्थविषयकस्य प्रवृत्यादीनि शब्दैरेव सम्भवन्तीति। अथ शब्दानामवबोध: विना व्याकरणं नैव सम्भव इति। अतएव तु व्याकरणं मुख्यं प्रतिपादयन् भर्तृहरिस्त्वत्र[१३]–

९. यजुर्वेद:, १९,७७
१०. साहित्यदर्पणात्, प्रथम: परिच्छेद:, पृ. ११
११. काव्यादर्श:, १.३४
१२. वाक्यपदीयम्, १.११



**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।**
**तत्त्वावबोध: शब्दानां नास्ति व्याकरणादृते।।**

अर्थप्रवृत्तितत्त्वस्य मूलतत्त्वं विवक्षा भवति। यथोक्तं हरिवृत्तौ[१४]– अर्थस्य प्रवृत्तितत्त्वं विवक्षा, न तु वस्तुस्वरूपतया सत्त्वमसत्त्वं वा। एतत् सर्वं व्याकरणेनैव भवितुमर्हतीति भाव:। व्याकरणं वाङ्मलानां विशोधनं करोति। क: शब्द: साधु: कश्चासाधुरिति विचारयतीति व्याकरणमेव। यथा शरीराणां दोषान् औषधं दूरीकरोति तथैव किल व्याकरणविद्या करोति वाङ्मलनाशमिति। यथोक्तं हरिवृत्तौ[१५]– आयुर्वेद इव शरीराणां दोषाणाम्। व्याकरणज्ञो हि प्रत्यवायहेतु–भूतानपभ्रंशान्न प्रयुङ्क्ते। व्याकरणमिदं संस्करोति अपशब्दान् इत्यनेनाभ्युदयो भवतीति। अतएव व्याकरणं मोक्षद्वारमुद्घोषितं किल भर्तृहरिणा[१६]–

**तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।**

यथा अर्थज्ञानस्य कारणं शब्द एव, तथैव किल व्याकरणविद्या सर्वासु विद्यासु महत्तमा चापि विद्यत इति। यथा विना शब्दं किलार्थ–ज्ञानमसम्भवं तथैवात्र व्याकरणविद्यां विना विद्यानां ज्ञानस्य नैव संभव इति। अत एव प्राधान्येनोक्तं व्याकरणमिति। सर्वेषु किलार्थेषु समवायसम्बन्धत्वेन विद्यमाना घटत्वजाति: या तिष्ठति तस्या: खलु जाते: बोधकत्वं घटशब्दत्वमस्तीति। तथैव किल सर्वासां विद्यानां शक्तिग्राहकत्वं तत्त्वं व्याकरणमेव यथोक्तं भर्तृहरिणा[१७]–

१४. हरिवृत्ति: (वा.प.१.१३)पृ. ३४–३५
१५. तदेव, (वा.प. १.१४, पृ. ३८)
१६. वा.प. १.१४
१७. तदेव, १.१५

**यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः।**
**तथैव लोके विद्यानामेषा विद्या परायणम्।।**

व्याकरणस्य मुख्यतां प्रतिपादयन् भर्तृहरिः कथयत्यत्र यत् सिद्धिसोपानपर्वणां प्रथमं पदस्थानं इदमेव व्याकरणमिति। मोक्षपर्वणां सर्वप्रथमं पर्व व्याकरणमेव। इयमेव विद्या मोक्षप्राप्तकर्तृणां अजिह्मा अकुटिला सरला वेति राजपद्धतिरिति। मोक्षमाणानां पुसां मुखं व्याकरणं प्रोक्तम्। यथोक्तं तत्र वाक्यपदीये[१८]–

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः।।**

मोक्षप्राप्त्यर्थमिदमेव व्याकरणं सरलतमः मार्गः, सरलतमा वेति राजपद्धतिरुद्घोषितेति। यतोहि व्याकरणेनानेनैव खलु वाक्शुद्धिरपि सम्भवतीति। येन किलाभ्युदयस्योदयः भवति। अत एव इदं किल व्याकरणं प्रथमं मोक्षपदमित्युदाहृतम्। अनेनैव व्याकरणज्ञानेन अतीत–भ्रमः साधकः वर्णपदप्रकृतिप्रत्ययादिशङ्कां प्रविहाय केवलां छन्दोमयीं पश्यन्तीवाणीं ब्रह्मरूपां पश्यतीति भावः। एतत् सर्वं वेदाङ्गानां प्रमुखेन मुखेनैव सम्भवतीति इति। यथोक्तं तत्र वाक्यपदीये[१९]–

**अत्रातीतविपर्यासः केवलामनुपश्यति।**
**छन्दस्यश्छन्दसां योनिमात्मा छन्दोमयीं तनुम्।।**

यच्छब्दब्रह्म भेदरहितायाः वाचः परमं रूपमस्ति, यच्च वैकृताध्वना बन्धकारे निमज्जितमस्ति,तच्छब्दब्रह्म व्याकरणेना–वगम्यत इति यथोक्तमत्र[२०]–

१८. वा.प. १.१६ १९. तदेव, १.१७
२०. तदेव, १.१८



**प्रत्यस्तमितभेदाया यद्वाचो रूपमुत्तमम्।**
**यदस्मिन्नेव तमसि ज्योतिः शुद्धं विवर्तते।।**

प्रकृतिप्रत्ययविभागप्रपञ्चं प्रकाशाप्रकाशावपि समुल्लङ्घ्य व्यतीत्य वेति निर्विकल्पकसमाधिगम्यं पश्यन्तीवाग्रूपं प्रकाशं शब्दब्रह्मरूपं यमुपासते, तच्छब्दब्रह्म व्याकरणेनैवाधिगम्यत इति भावः। भर्तृहरेः महतीयं घोषणा विद्यते यत् शब्दसाधकानां निर्विकल्पकसमाधौ शब्दब्रह्मणः अनुभूतिः प्रकाशरूपेणैव भवति। कथितञ्चात्र[२१]–

**वैकृतं समतिक्रान्ता मूर्तिव्यापारदर्शनम्।**
**व्यतीत्यालोकतमसी प्रकाशं यमुपासते।।**

वस्तुतः एतच्छब्दब्रह्म प्रकाशरूपमेव अस्यैव तेजसा कृत्स्नं जगदिदं समवलोकितं भवतीति। अस्मात्पूर्वं नैव किल सूर्यादयः भान्तीति। यथोक्तं मुण्डकोपनिषद्यपि[२२]–

**न तत्र सूर्यो भाति न चन्द्रतारकं,**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं,**
**तस्य भासा सर्वमिदं विभाति।।**

व्याख्यायामस्यां शाङ्करभाष्यकारस्यापि कथनमस्ति यत् ब्रह्मप्रकाशं विना नैवास्ति किल सामर्थ्यं सूर्यादावपि। यथोक्तं तत्र शाङ्करभाष्ये[२३]– स हि तस्यैव भासा सर्वमन्यदनात्मजातं प्रकाशयति इत्यर्थः। न तु तस्य स्वतः प्रकाशनसामर्थ्यम्। ब्रह्मणः अतीन्द्रियत्वमपि प्रतिपादितमस्ति। केवलं ब्रह्मैतद् ज्ञानप्रसादेन विशुद्धसत्त्वः ध्यायमानः एव पश्यतीति। यथोक्तं तत्र मुण्डकोपनिषदि[२४]–

२१. वा.प, १.१९ २२. मुण्डकोपनिषद्, २, १०
२३. शाङ्करभाष्यम्, (मु. उपनि., २.२.१०) २४. मुण्डकोप. उपनि., १.३.८

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते ध्यायमानः।।**

एतादृशं समधिगम्यं विशुद्धसत्त्वेनाधिगम्यं वेति परमं पश्यन्तीरूपं शब्दब्रह्म व्याकरणेनैवाधिगम्यत इति भावः।

शब्दब्रह्मैवास्ति तत्, यस्मिन् सर्वे शब्दाः जलादौ यथा प्रतिबिम्बं प्रतिभाति तद्वच्च प्रतिभासन्त इति। यथोक्तं तत्र[२५]–

**यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः।**
**शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत्।।**

व्यख्यायामस्याम् अम्बाकर्त्रीकारस्त्वत्र[२६]– शब्दपूर्वेण योगेन साधुशब्द– तादात्म्यापन्नात्मविषयकसविकल्पसमाधिना, प्रतिबिम्बवत् स्वच्छे जलादौ प्रतिबिम्बमिव ब्रह्मणि सर्वे शब्दाः भासन्ते। वाच्यवाचकयोस्तादात्म्यादिति भावः। यस्मिन् सर्वे शब्दाः प्रतिभासन्ते तच्छब्दब्रह्म व्याकरणेनैव लभ्यत इति।

भर्तृहरेः कथनमत्र विद्यते यत् चत्वारो वेदाः उदात्तानुदात्तादयः वर्णाः स्वरभेदाः विविधाः शाखाश्च तस्मिन् शब्दतत्त्वात्मनि अभेदरूपेण तिष्ठन्तीति भावः। एतेषां पृथक् पृथक् स्थितिस्तु केवलं निमित्तार्थमेवास्ति। वस्तुतस्तु ऐक्यभावेन भवन्ति शब्दब्रह्मणि। यथोक्तमत्र[२७]–

**अथर्वणामङ्गिरसां साम्नामृग्यजुषस्य च।**
**यस्मिन्नुच्चावचा वर्णाः पृथक् स्थितिपरिग्रहाः।।**

यस्मिन् शब्दतत्त्वे सर्वे वेदादयः विलीयन्ते। तच्च शब्दब्रह्म नान्येनापितु व्याकरणेनाधिगम्यते इति। यद्यपि सर्वाणि वेदाङ्गानि

२५. वा. प. १.२० २६. अम्बाकर्त्री व्याख्या, (वा.प.१.२०)
२७. वा. प., १.२१



सन्ति महत्त्वयुतानि, परन्तु सर्वेषु एषु त्रिषु व्याकरणमेव प्रमुखमित्यत्र प्रतिपादयति भर्तृहरिः। पुरुषार्थचतुष्टयेषु मोक्षः[२८] परम– पुरुषार्थत्वेन प्रतिपादितः किल। एतादृशः परमपुरुषार्थमोक्षोऽपि व्याकरणे– नाधिगम्यत इति। एतादृशं परमं ब्रह्म व्याकरणमधीत्यैव लभ्यते। यथोक्तं तत्र[२९]

**यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।**
**तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते।।**

यस्य परमब्रह्मणः विषये बहवः मार्गाः दुर्गम्याः कथ्यन्ते। यस्य च विषये "नायमात्मा बलहीनेन लभ्यः"[३०] "यं पश्यन्ति यतयः क्षीणदोषाः"[३१] "नायमात्मा प्रवचनेन लभ्यो[३२] इत्यादिभिः वचनैरभिहितं तच्छब्दब्रह्म रहस्ययुतं व्याकरणेन प्रापणीयमिति भावः।

अपभ्रंशदोषान् अपाकरोति लक्षणशास्त्रं व्याकरणशास्त्रं वेति। अपशाब्दानां असाधुशब्दानां शोधनार्थं व्याकरणमध्येयमिति प्रतिपादयति भर्तृहरिः। कथयति चात्र व्याकरणं लक्षणशास्त्रं वेति अपभ्रंशत्यागार्थमेव प्रारब्धमिति[३३]–

**कायवाग्बुद्धिविषया ये मलाः समवस्थिताः।**
**चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः।।**

२८. अत्र मदीयः लेखः "भर्तृहरिमते मोक्षस्वरूपमिति" विश्वसंस्कृतम् (मार्च–१९९५) द्रष्टव्य इति।
२९. वा. प. १.२२ ३०. मुण्डकोपनिषद्, ३.२.४
३१. तदेव, ३.१.५ ३२. तदेव, ३.२.३,
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्।।
३३. वा.प. १.१४६

हरिवृत्तावपि[३४] भावोऽयं प्रतिपादितः– तथेदमपि साधूनां वाचः संस्काराणां ज्ञापनार्थमपभ्रंशानां चोपघातानां त्यागार्थं लक्षणमारब्धम्। साधुशब्दस्य प्रयोगयोगार्थमेव व्याकरणस्मृतिरिति। यथोक्तमत्र वाक्यपदीये[३५]–

**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।**
**अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्।।**

किं वाच्यं किंवा अवाच्यमित्यपि द्योतयति व्याकरणाभिधानरूपा स्मृतिरिति। कथितं तत्र हरिवृत्तावपि[३६]– तथेयमपि वाच्यावाच्य–विशेषविषया व्याकरणाख्या स्मृतिः। भर्तृहरिणा महता कण्ठेनोक्तं यत् साधुत्वसंस्काररहितः शब्दः अर्थश्च अर्थविशेषे प्रयुक्तः यः शब्दः स अपभ्रंश इत्युच्यते। उक्तञ्च ापि[३७]–

**शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते।**
**तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम्।।**

संग्रहकारस्तु[३८] शब्दप्रकृतिरपभ्रंश इति प्रतिपादयति। गौरिति शब्दः पशुविशेषार्थे तु साधुः, परं गोशब्दस्यार्थे गोणीति शब्दः प्रयुज्यते चेत्तत् शब्दोऽयं गोणी असाधुरिति। अयमेव गोणीशब्दः आवपनेऽर्थे प्रयुज्यते तदा साधुः भवतीति भावः। वैयाकरणैः किल असाधुशब्दाः नैव साक्षात्वाचकाः स्वीक्रियन्ते। असाधवः अपभ्रंशाः वेति शब्दाः नैव पर्यायाः किल साधूनां शब्दानामिति भावः। यथोक्तमत्र भर्तृहरिणा[३९]–

३४. हरिवृत्तिः (वा.प. १.१४६) ३५. वा.प. १.१४१
३६. हरिवृत्तिः (तदेव, १.१४१) ३७. वा.प. १.१४७
३८. हरिवृत्तिः, (वा.प. १.१४७) ३९. वा.प. १.१५०



**न शिष्टैरनुगम्यन्ते पर्याया इव साधवः।**
**ते यतः स्मृतिशास्त्रेण तस्मात् साक्षादवाचकाः।।**

शिष्टेभ्यः जनेभ्यः आगमाच्चागमशास्त्रेभ्यः वेति सिद्धाः शब्दाः भवन्तीह साधवः किल। यद्यप्यसाधवोऽपि शब्दाः अर्थबोधकाः भवन्ति, किन्तु नैव भवन्ति किल धर्मसाधनम्। यथोक्तमत्र भर्तृहरिणा[४०]–

**शिष्टेभ्य आगमात् सिद्धाः साधवो धर्मसाधनम्।**
**अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः।।**

अर्थप्रत्यायिका शक्तिः साध्वसाधुषु शब्देषु अभेदकतत्त्वरूपेण तिष्ठतीति भावः। धर्मसाधनत्वमेवास्ति किलात्र भेदकतत्त्वमिति। अर्थावबोधः किलासाधूनां शब्दानां साधुशब्दस्मरणेनानुमानेन वेति भवतीति भावः। असाधवः शब्दाः साधव एवेति तादात्म्यात् बोधो भवति। एवमत्र तादात्म्यात् एकात्मत्वात् भावात् गोणी इत्यत्र गौरेव भवति प्रतीतिरिति। यथोक्तं वाक्यपदीये[४१]–

**ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः।**
**तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः।।**

बालोऽपि साधुशब्दोच्चारणे प्रयत्नवानपि दन्ताभावेन करणशक्ति–वैकल्यात् अव्यक्तमेव शब्दं प्रयुङ्क्ते तदपि माता बं बमिति अव्यक्तेन शब्देनापि अम्बेति जानाति। तत्रापि असाधुशब्देन साधुरिति गृह्यते। साधुशब्दोच्चारणायासाधुशब्दः उच्चर्यत इति। यथोक्तं तत्र[४२]–

**अबाम्बेति यथा बालः शिक्षमाणः प्रभाषते।**
**अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः।।**

साधुशब्दप्रयोगस्य स्थाने योऽपभ्रंशः प्रयुज्यते तत्रार्थबोधनात् पूर्वं साधुशब्दस्योपस्थितिर्भवतीति। येनासाधुशब्देनापि साधुशब्द अवगमत

४०. वा.प. १.२७ ४१. वा.प., १.१४९ ४२. तदेव, १.१५१

इति। यथोक्तं वाक्यपदीये[४३]–

**एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।**

**तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते।।**

व्याख्यायामस्यां प्रतिभाटीकाकारस्तु[४४]– ''तत्र यदि कश्चिदपभ्रंशं प्रयुङ्क्ते, शिष्टास्तमपभ्रंशं साधुशब्दस्य प्रतीतिलिङ्गं मत्त्वा प्रतीतेन साधुनार्थमवधारयन्ति। यथा धूमेन लिङ्गेन वह्निरनुमीयते, तथैवापभ्रंशेन साधुरनुमीयते।'' स्त्रीशूद्रचाण्डालादयः ये किल सन्ति, तेषां कृते तु साधवः एव शब्दाः अवाचका इति। पारम्पर्यात् गतानुगतिकतया अविद्यया अज्ञानतया अभ्यासाच्चासाधवः अपभ्रंशाः एव शब्दाः प्रमाद्यत्सु वक्तृषु प्रसिद्धिमुपगता भवन्तीति। अत्रासाधव एव प्रसिद्धिप्राप्तत्वात् वाचकत्वमुपगताः भवन्ति लोके। कथितञ्चापि भर्तृहरिणा[४५]–

**पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।**

**प्रसिद्धिमागता येषु तेषां साधुरवाचकाः।।**

इत्यनेनावबोध्यते यत् एतेषां कृते साधवः एवावाचका इति। हरिवृत्तावपि[४६] निगदितं यत्– तमेव चासाधुं वाचकं प्रत्यक्षपक्षे मन्यन्ते। साधुं चानुमानपक्षे व्यवस्थापयन्तीति।

अत्र किल भर्तृहरिणा शूद्रचाण्डालानां समाजे प्रथिता प्रथा निगदिता। अयमेव चापि व्यवहारः अवलोक्यत इति। अम्बाकर्त्रीकारस्तु[४७]– स्त्रीशूद्रादीनामपभ्रंशेभ्यः एवार्थबोधः शक्ति– भ्रमात्। शक्तिभ्रमस्य च कारणं तत्तदर्थेऽपभ्रंशानां पारम्पर्येण लोकप्रसिद्धिरिति।

दैवीवागियमशक्तैरसमर्थैः जनैः किल वक्तृभिः वेति असाधुशब्दैरपभ्रंशैः वेति कृता व्यवकीर्णा। शब्दमनित्यं ये किल पश्यन्ति तेऽनित्यवादिनः सन्तीति। तेषां तु वादेऽस्मिन् बुद्धिविपर्यय

---

४३. वा.प. १.१५२ ४४. प्रतिभाटीका (वा.प. १.१५२)

४५. वा.प. १.१५३ ४६. हरिवृत्तिः (वा.प. १.१५३)

४७. अम्बाकर्त्री व्याख्या (वा.प. १.१५३)



इति। कथितञ्च ाप्यत्र वाक्यपदीये[४८]–

**दैवीवाग् व्यतिकीर्णेयमशक्तैरभिधातृभिः।**

**अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः।।**

ये किलापभ्रंशानां शब्दानामेव मूलास्तित्वमङ्गीकुर्वन्ति, ते तु साधूनां धर्महेतुत्वं नैव प्रतिपद्यन्त इति। कथयन्ति ते यत् पूर्वमपभ्रंशा एवासन्, पश्चात् संस्कृताः साधवः सञ्जाताः। तेषां मते अपभ्रंशरूपा प्रकृतिरेव प्राक् व्यवस्थिता, साधुशब्दस्तु पश्चात् संस्कृतः व्यवस्थितो वेति कृतः। अतएव विकाररूपः संस्कृतः, साधुशब्दः प्राकृतिकः। पूर्वोपस्थितत्वात् असाधुरेव प्रकृतिरिति। एते किलापभ्रंशा अपि वाचका इति। अनित्यवादिनः साधूनां धर्महेतुत्वं न प्रतिपद्यन्ते। हरिवृत्तावपि सुस्पष्टमुक्तं किल भर्तृहरिणा[४९]– अनित्यवादिनस्तु ये साधुनां धर्महेतुत्वं न प्रतिपद्यन्ते, मल्लसमयादिसदृशीं साधुव्यवस्थां मन्यन्ते, ते प्रकृतौ भवं प्राकृतं साधूनां शब्दानां समूहमाचक्षते। विकारस्तु पश्चाद् व्यस्थापितः यः संभिन्नबुद्धिभि पुरुषैः स्वर– संस्कारादिभिः निर्णीयत इति।

यद्यपि साध्वसाधुशब्दौ भवतः अर्थवाचकौ। परं वैयाकरणाः पुण्यजनकत्वयुतं शब्दं साधुशब्दरूपेणाथचापुण्यजनकत्वयुतं शब्दमसाधुशब्दरूपेणोद्घोषयन्तीति। अतएव तु महाभाष्यकारोपि कथयत्येव[५०]– ''यस्तु प्रयुङ्क्ते कुशलोविशेषे शब्दान् यथावद् व्यवहारकाले। सोऽनन्तमाम्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः''। भर्तृहरिरपि निगदति यत् शब्दसंस्कार एव परमात्मनः सिद्ध्युपायःि कल ास ाधुशब्दानामपभ्रंशेभ्यःि ववेकज्ञानमेवश ाब्द– संस्कारफलमिति। कथितञ्च वाक्यपदीये[५१]–

**तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।**

**तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते।।**

---

४८. वा.प. १.१५४ ४९. हरिवृत्तिः (वा.प. १.१५४)

५०. महाभाष्यम् (प्रथमाह्निके) ५१. वा.प. १.१३१

अभ्युदयार्थिनां कृते महानयं घोषः यत् अभ्युदयार्थिभिः सर्वदैव साधुभिरेव शब्दैर्वाच्यमिति। इत्यनेनाभ्युदयेन मोक्षाधिगमोऽपि कथितश्च ापि भर्तृहरिणा[52]–

**यथैषां तत्र सामर्थ्यं धर्मेऽप्येवं प्रतीयताम्।**

**साधूनां साधुभिस्तस्माद् वाच्यमभ्युदयार्थिनाम्।।**

यदि साधुशब्दानामुच्चारणसमये चाध्ययनसमये वा असाधूनां शब्दानामुच्चारणं भवेच्चेत्, नैव चिन्तनीयम्। कूपखननन्यायेन भवति दोषछालनमिति। कूपखानकः कूपखननसमये पांशुभिः लिप्तो भवति। अथ च तस्यैव कूपजलेन चापि करोति प्रच्छालनमपि। इममेव भावं स्पष्टयन् पतञ्ज लिस्तु[53]– ''येन स दोषः निर्हण्यते, भूयसा चाभ्युदयेन योगोभ वति''।भ र्तृहरिणा[54]त ुम हताक ण्ठोनोक्तंय त्–' 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते'' इत्यनेनापि सुस्पष्टं भवति यत् साधुशब्दज्ञानकाले अपशब्दानां असाधूनां शब्दानां वेति ज्ञानेन यदि भवन्ति किल दोषाः चेत् नैव चिन्तनीयम्।

उपर्युक्तानि मतानि दर्शं दर्शं प्रतीयते यत् शब्दः साधुः भवत्वसाधुर्वा अर्थस्य बोधस्तूभयत्रापि भवत्येव। परं साधुशब्देन भवत्यभ्युदयः, नैव च भवति शब्देनासाधुना। अतः साधुभिरेव शब्दैः वाच्यमिति। सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत[55] इत्यनेनावगम्यते यत् व्याकरणबलेनैव धीराः वैयाकरणाः प्रकृति-प्रत्ययविभागमथ च शब्दापशब्दविवेचनमपि कुर्वन्तीति भावः। महाभाष्यकारस्य डिमडिमघोषोऽयं विद्यते यदपशब्देन भवन्ति प्रायश्चित्तीया जना इति। एतदर्थं सर्वदा साधुशब्दस्यैव प्रयोगः करणीय इति। एषः साधुप्रयोगस्तु विना व्याकरणं नैव सम्भवतीति। अत्राप्यनेन

५२. वा.पा., १.१३९

५३. महाभाष्यम् (प्रथमाह्निके), पृ. ३९ ५४. वा.प. २.२३८

५५. महाभाष्यम्, १.पृ. १४



व्याकरणस्यैव मुख्यता प्रतिपादिता किल भाष्यकारेण। कथितश्च ाप्यत्र[56]– याज्ञिकाः पठन्ति आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्। प्रायश्चित्तीयाः मा भूमेत्यध्येयं व्याकरणम्।

व्याकरणमेवासंदेहान्धयुतं द्वारमुद्घाट्य तत्र साधुशब्दप्रकाशं तनोतीति। स्थूलपृषतीति स्थले अवैयाकरणाः स्वरादिसन्देहनिवारणे भवन्त्यक्षमा इति। अतः सन्देहनिवारणार्थं चाध्येयं व्याकरणमिति[57]। षट्स्वङ्गेषु व्याकरणमेवात्र कथं मुख्यत्वेन स्मृतमत्र भाष्यवचनं प्रमाणम्। महाभाष्यकारेणोक्तमत्र-रक्षार्थं वेदानामध्येयं व्याकरणमिति[58]। सम्यग्वेदान् परिपालनाय लोपागमवर्ण विकार-विदेव वैयाकरणः समर्थ इति। सामर्थ्यादेवास्मात् वेदसंरक्षण-योग्यत्वाद्वा कारणात् व्याकरणं मुख्यत्वेन स्मृतमिति। महाभाष्यकारेण प्रधानं च षट्स्वङ्गेषु व्याकरण मित्यत्र यदुक्तं तदेवानुसृत्य भर्तृहरिणाऽप्यत्रोक्तं प्रथमं छन्दसामङ्ग[59] व्याकरण मेव। इदमेव चापि तपसामुत्तमं तपः अथ च ब्रह्मणः निकटतममप्युक्तमिति। इत्यनेनैव तपसोपलभ्यते ब्रह्मेति-तपसा चीयतेब ्रह्म[60]इ त्यपिम ुण्डकोपनिषद्यप्युक्तमिति ।त पसामुत्तमंत पः इत्यनेन सुस्पष्टं भवति यत् भर्तृहरिणा षडङ्गेषु व्याकरणमेव मुख्यतममिति प्रतिपादितमस्ति। अथ च शिक्षाकारेण मुखं व्याकरणं स्मृतमिति यदुक्तं तदप्यत्र अन्वेति इति भावः।

५६. महाभाष्यम्, पृ. १५ ५७. तदेव, पृ. ६.

५८. तदेव, पृ. ४

५९. वा. प. १.११, प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः।

६०. मुण्डकोपनिषद्, १.१.८

ISSN-0975-4474
पौष २०७६, चैत्र २०७७ वि.सं.

विश्वसंस्कृतम
वर्षः ५६-५७, अङ्कौ-४;१

# अपौरुषेयसाहित्ये-देवकल्पना-दिधीतिः

डॉ. मिताली देव
डी. लिट्. राष्ट्रपति सम्मानित
संस्कृत विभाग,महिला महाविद्यालय,
काशी हिन्दू विश्वविद्यालय, वाराणसी।

**वन्दे मुदे दारितविध्नवृन्द-कन्दे मुकुन्दीयपदारविन्दे।**
**यन्देवमिन्द्रोऽपि विंदे ववन्दे सन्देहमेते तमपीह वन्दे।।**
**कालिन्दीनीलनीरोत्तरचल-लहरी सङ्गरिङ्गत्तरङ्गा।**
**गङ्गासुङ्गाङ्गासङ्गा दिशति दिवि सतामङ्गनाङ्गभङ्गात्।**
**या साऽनङ्गारिसङ्गा मृगसुभगदृशी दृक्तरङ्गा-प्रभङ्गा-**
**लिङ्गदभृङ्गालितुङ्गान्वितरतु मयि तानङ्गसङ्गाघभङ्गान्।।[१]**
**वेदितव्यं दैवतं हि मन्त्रे मन्त्रे प्रयत्नतः।**
**दैवतज्ञो हि मन्त्राणां तदर्थमवगच्छति।।**
**न हि कश्चिदविज्ञाय याथातथ्येन दैवतम्।**
**लौक्यानां वैदिकानां वा कर्मणां फलमश्नुते।।[२]**

वैदिकसाहित्ये बहूनां देवानां स्तुतिर्दृश्यते। स्तुतिरपि अनेकविधा क्वचिन्नाम्ना, क्वचित् कर्मणा, क्वचिद्रूपेण, क्वचिद्वा बान्धवेन स्तवः स्तोत्रं स्तुतिर्भवति। किञ्चिदर्थवस्तु कामयमानो देवतायाः प्रसादेनाहमस्यार्थस्य पतिर्भविष्यामीति बुद्ध्या ऋषिर्देवान् स्तौति। यो देवः सा देवता। सा हि मन्त्रेण प्रतिपाद्यते। केचिदाजानदेवाः सृष्ट्यादौ

१ क्रतुरत्नमाला। २ बृहद्देवता १/२;४.



समुत्पन्ना अग्नीन्द्र-सूर्यादयः अन्ये च कर्मदेवाः यज्ञादिपुण्यकर्मणा देवत्वं गताः केचिदेकत्वाऽवच्छिन्नाः अग्नीन्द्र-सूर्यादयः। कुत्रचित् प्रसिद्धसाहचर्यवशाद् युग्मत्वेन देवत्वकल्पना, यथा मित्रावरुणौ इन्द्राग्नी। कुत्रचिद् समूहः देवाः कल्प्यन्ते, यथा रुद्रा मरुतो विश्वेदेवाः। देवतानां नामानि प्रसिद्धान्येव, क्वचिदुच्यन्ते-

**अग्निरिन्द्रश्च वायुश्च सूर्यः सोमो वृहस्पतिः।**
**मित्रश्च वरुणश्चैव विष्णुस्त्वष्टा सरस्वती।।**
**अज एकपादहिर्बुध्न्य उषा पूषा प्रजापतिः।**
**अश्विनौ मरुतो धाता विश्वेदेवा यमस्तथा।।**

एकैकशो वैदिक-देवता-स्वरूपवर्णनाय स्वतन्त्रग्रन्थ-स्वरूपमपेक्ष्यते। अतः तस्मात् सामान्यधर्माः केचिदेवात्र विव्रियन्ते। देवानां जरा मृत्युर्वा नास्ति, सत्यं तेषां स्वभावः, धीरा महान्तोऽवितारश्च ते भवन्ति। रत्नदातृत्त्वं वाजसातमत्त्वं वृत्रहन्तृत्वं जुष्टत्त्वं कवित्वोजिष्ठत्त्वं यजिष्ठत्त्वं वरिष्ठत्वं शिवत्वमित्येवमादीनि वैशिष्ट्यानि वैदिकदेवानां साधारणानि मन्त्रेषु प्रतिपादितानि। सर्वं पश्यन्ति जानन्ति च देवाः। अपि च ते सर्वात्मना स्तूयन्ते। तथा च श्रूयते-

**रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय।**
**इन्द्रो मायाभिः पुरुरूपः ईयते युक्ता ह्यस्य हरयः शता दश।।[३]**

किञ्च-

**अदितिद्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।**
**विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्।।[४]**

३ ऋक् ६.४७१८ ४ ऋक् १.८९.१०

वैदिकदेवा वर्षणादिसम्पादनेन शस्यश्यामलां कुर्वन्ति पृथिवीमिमाम्, यदा यदा वृत्रादिदानवोत्था बाधा लोकेषु आविर्भवति तदा तदा ते शत्रुसंक्षयं कुर्वन्ति। पुण्यकृतां चेतसि प्रीतिं पापकृताञ्च चेतसि भीतिं जनयन्ति ते। विग्रहवती ऐश्वर्यसमन्विता देवता हिरण्मयरथारुढ़ा यजमानैराहूता यज्ञभूमिमागम्य यथाविधि हुतं हविर्गृह्णाति, गृहीत्वा प्रसीदति, प्रसन्ना च सती यजमानेभ्यः सर्वमीप्सितं फलं प्रयच्छति। तदिदं विग्रहादिपाञ्चकं देवतानाम्।

वैदिक-साहित्ये देवानामपि जातिभेदः कल्प्यते। यथा- अग्नेर्बृहस्पतेश्च ब्राह्मणत्वम् इन्द्रवरुणसोमरुद्रादीनां क्षत्रियत्वम्, गणेश-आख्यातानां वस्वादीनां वैश्यत्वम्, पूष्णश्च शूद्रत्वं इति संक्षेपतः तत्र तत्र बोधितमस्ति। ज्योतिर्मयत्वं बृहत्त्वं च प्राधान्यं भजते वैदिकसाहित्ये देवकल्पनायाम्।

देवशब्दस्य मूलं दिव्धातुरेव ज्योतिर्मयत्वं देवानां सूचयति। आर्या हि ज्योतिरग्राः।

**तमसो मा ज्योतिर्गमय, इति तेषां प्रार्थना।**

तस्माद् भास्वन्मयूखविमलीकृतदिग्विभागा ज्योतिर्मया देवाः प्रसादयन्त्यार्याणां चित्तम्। ऋषिर्गौरिवीतिराह।

**अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान् निधयेव बद्धान्।**[५]

देवोपासनया यजमानोऽपि ज्योतिरवाप्नोति, तदुक्तम्-

**अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्।**[६]

याज्ञिका यावदभिधानं देवताभेदमङ्गीकुर्वन्ति। स्थानभेदात्

५ ऋग्वेद १०.७३.११ ६ ऋग्वेद ८.४८.३



त्रित्वं देवानामिच्छन्ति नैरुक्ताः, तथा चोक्तम्-

**अग्निरस्मिन्नथेन्द्रस्तु मध्यतो वायुरेव च।**

**सूर्यो दिवीति विज्ञेयास्तिस्र एवेह देवताः।।**

**एतासामेव माहात्म्यान् नामान्यत्वं विधीयते।**

**तत्तत्स्थानविभागेन तत्र तत्रेह दृश्यते।।**

आत्मविन्मते त्वात्मैवेदं सर्वम्। तस्मादेक एव सर्वभूतान्तरात्मा वेदे बहुधा स्तूयते। एवमद्वैतप्रतिपादका मन्त्राः सन्ति बहवः, सुप्रज्ञाता अपि केचिन्मन्त्रवर्णाः, यथा-

**एकं सन्तं बहुधा कल्पयन्ति।**[७]

**एकं सद्विप्रा बहुधा वदन्ति।**[८]

तेनच ाश्वादीनामपिव`देद`वतावत्स् तुतिर्नैर्वा वरुद्धाइ त्याशय आत्मविदाम्। वस्तुतस्तु दर्शनभेदात् सर्वमेतदुपपद्यते। अत एव श्रीभगवता वेदार्थः प्रोक्तः-

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।**[९]

तस्माद् देवतैकत्ववाद-देवताबहुत्ववादयोरपूर्वः कश्चित् समन्वयो वैदिक-साहित्ये देवत्वकल्पनायां विशेष इत्यवगच्छन्तु सुधियः।

वेदमन्त्रेषु देवतया सह नरस्य सुतरां नैकट्यं स्फुटमस्ति। देवता तत्र वर्णिता 'पितेव पुत्रस्य सखेव सख्युः' पिता यथा धर्ममनुशास्ति तथैव देवतापि स्वभक्तम्। पिता यथा पुत्रस्य रक्षणार्थं प्रयतते तथा

७ ऋग्वेद १०.११४.५. ८ ऋग्वेद १.१६४.४६ इति
९ गीता ४.११. १० ऋग्वेद, १०.८२.३.

देवताप्यस्माकम्। तदुच्यते--

**यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।**

**यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या।।**[10]

अशेषपूज्याः कल्याणसाधकेषु देवेष्वार्याः कदाचित् पितृसादृश्यं कदाचिन् मातृपितृ-भ्रातृसादृश्यं ददृशुः। ऋक्संहितायां ऋषिराह-

**त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ।**

तस्माच्छत्रुभिरर्दिता व्याधिभिर्वा पीड़िता धनं वा याचमाना आर्याः सर्वदा देवतामेव स्मरन्ति स्वस्वाभीष्टसिद्ध्यर्थम्। देवाः सर्वथा नराणां हितं साधयन्ति, नराश्च यज्ञैर्देवान् परितोषयन्ति। स्तूयमाना हि देवता वीर्येण विवर्द्धते आहुतितर्पिता च एवम् अन्योन्यसम्पद्विनिमयेन सुरलोकस्य नरलोकस्य च यात्रा प्रचलति।

यद्यपि देवा बहुगुणालंकृता यष्टव्याश्चेत्यत्र नास्ति शंकाकलङ्कावसरस्तथापि परब्रह्मापेक्षया ते न्यूना एवेत्ययं विषय उपनिषत्सु स्पष्टीकृतः।

वस्तुतस्तु ब्रह्मैव परमो देवः-देवानामपि प्रभवश्चोद्भवश्च। तमेव महान्तं पुरुषं नत्वोपसंहरामि--

**यो देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश।**

**य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः।।**[11]

---

१० ऋग्वेद, १०.८२.३.

११ श्वेताश्वतरोपनिषत्, २.१७



ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कौ-४;१

# भक्तिप्रियो माधवः

डॉ. रामसुरेशपाण्डेयः
प्राचार्यः, श्रीदण्डिस्वामिधर्मसङ्घसंस्कृत-
महाविद्यालयः, हैबोवालकलाँ,
लुधियाना (पञ्जाब) १४१००१

जन्म-जरा-मरणादिदुःखौघतातप्यमानान् मानवान् अस्मात् संसारार्णवाद् उद्धर्तुं समर्थो भगवान् माधव एवाऽस्ति। अखिलब्रह्माण्डनायकस्य परमपितुः परमेश्वरस्य भगवतो नारायणस्य रामकृष्णादि-विभिन्ननामसु 'माधव' इति नामाऽपि अत्यन्तं प्रसिद्धत्वेन विराजते। तस्याऽर्थो भवति- '**मायायाः लक्ष्म्याः धवः पतिरिति माधवः**' अर्थात् लक्ष्मीपतिः श्रीमन्नारायणः। तम् भगवन्तं माधवं प्राप्तुं गीतादिशास्त्रेषु ज्ञानयोगस्य, कर्मयोगस्य, भक्तियोगस्य च उल्लेखो लभ्यते। तत्र योगशब्दस्याऽर्थो भवति-'**जीवम् ईश्वरेण सह संयोजनम्।**' ज्ञानयोगिनः, कर्मयोगिनः, भक्तियोगिनश्चेत्येते त्रिविधाश्च जनाः भगवत्कृपामपेक्षन्ते। यतोहि भगवत्कृपां विना मानवाः स्वजीवनस्य परमं लक्ष्यं लब्धुं नहि शक्नुवन्ति। भगवतः कृपाऽवाप्तये ज्ञानादयो ये त्रयो योगाः शास्त्रेषु वर्णिताः सन्ति तेषु भक्तियोग एव तदर्थं विद्यते सरलतमोपायः।

'भज् सेवायाम्' इत्यस्माद् धातोः क्तिनि कृते सति भक्तिशब्दस्य

सिद्धिर्जायते।भ जनम्-स`वाच`त्यादयोऽर्था:स न्तिभ क्तिशब्दस्य। भगवत: चरणयो: पूर्णरूपेण स्वात्मसमर्पणमेव उत्तमा भक्तिर्भवति। श्रद्धा, सेवा, सम्मानम् अनुरागश्चाऽपि भक्तिरूपेणाङ्गीक्रियन्ते। भक्तिविषयेप क्षद्वयस्यस मावेशोज ायते-प्र थम:भ गवान् द्वतीयो भक्तश्च। भक्तस्य मनसि भगवन्तम् प्रति आसक्ति: भवति, आसक्त्या च प्रेम उत्पद्यते। यदा भक्तस्य भगवन्तम् प्रति प्रेम्ण: उत्कृष्टता एव भक्ते: स्वरूपं धृत्वा सम्बन्धं स्थापयति, तदानीं भक्त: स्वकीयं सर्वस्वं परित्यज्य आत्मानं भगवते समर्पयति तथा भगवद्दर्शनाय अतिविह्वलो भवति।

भक्ते: स्वरूपं निगदता महर्षिणा नारदेनोक्तमस्ति यत्-'**फलमनपेक्ष्य भगवत: सेवनमेव भक्ति: कथ्यते।**' तेन महर्षिणा स्वकीये भक्तिसूत्रे एनामेव भक्तिं सिद्धावस्थायां परमप्रेमरूपाम् अमृतस्वरूपाञ्च मत्वा भक्ति: इत्थम् परिभाषिता-

**सा त्वस्मिन् परम-प्रेमरूपा अमृतस्वरूपा च।**[1]

सा च भक्ति: सगुणनिर्गुणभेदात्मिका द्विधा भवति। सगुणभक्ति: अत्यधिकं सरला शीघ्रफलदायिनी च मन्यते। सगुणभक्ति: तामसी, राजसी, सात्त्विकी चेति भेदात् पुनस्त्रिविधा ज्ञायते। तत्र हिंसा-दम्भ-क्रोधादिवशात् स्वेच्छापूर्त्तये कृता भक्ति: तामसी भवति। यश-ऐश्वर्यादिप्राप्तिकामनया सभेदं कृता भक्ति:राजसी-भक्ति: कथ्यते। यदा भक्त: स्वकीयं सर्वमपि कर्म ईश्वराय समर्प्य तस्मिन्नेव

१. नारदभक्तिसूत्रम्-१/२/३.



आसक्तो भवति तदा सा भक्ति: सात्त्विकी भक्ति: मन्यते। तामसीभक्त: शत्रुनाशादिरूपं परापकारमिच्छति। राजसीभक्तश्च धनकुटुम्बादिकमिच्छति। सात्त्विकश्च भक्त: केवलम् मोक्षमेव कामयते।

निर्गुणभक्तिस्तु कष्टसाध्या भवति। सा भक्तिस्तु सर्वमपि जगत् ईश्वरमयमत: स्वकीयं सर्वमपि कर्म वा कर्मफलं तस्मै एव समर्पणीयम् इत्येवंरूपा भवति। निर्गुणभक्तिसम्पन्नो भक्तस्तु मोक्षमपि नहि कामयते, स तु शत्रुमित्रवञ्चितो भवति। स खलु सांसारिकमायासन्तापरहितो वर्तते। सोऽनन्यभक्त: ईश्वरदर्शनमात्रेणैव परमं सुखम् अनुभवति। पूर्वोक्तप्रकारातिरिक्ताऽपि सा भक्ति: पुराणाद्यनुसारं श्रवणादिभेदेन नवविधा विद्यते, या नवधा भक्तीति नाम्ना ज्ञायते। तद्यथा-

**श्रवणं कीर्तनं विष्णो: स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।**[2]

**१. श्रवणम्-** भगवतो यशसां, महत्तानां, गुणानाम्, पवित्रनाम्नां लीलानाञ्च सश्रद्धं श्रवणमेव श्रवणभक्ति: निगद्यते।

**२. कीर्तनम्-**भ गवतोन ाम्नां,ग ुणानां,म ाहात्म्यानां,ल ीलादीनाञ्च वर्णनं, गायनं, पठनञ्च कीर्त्तनरूपा भक्ति: कथ्यते।

**३. स्मरणम्-** भगवतो नाम्नां, गुणानां, माहात्म्यानां लीलादीनां तथा च सर्वव्यापकतादीनामपि सर्वदा ध्यानकरणं तत्स्मरणे सततं तल्लीनता

२. श्रीमद्भागवतमहापुराणम्-७/५/२३.

च स्मरणस्वरूपा भक्तिर्भवति।

**४. पादसेवनम्–** संसारसागरादुद्धर्त्तुं सर्वथा समर्थयो: नौकास्वरूपिणो: श्रीमद्भगवत: पावनपादारविन्दयो: स्वपरमकल्याणाय आश्रयीकरणमेव पादसेवनभक्तिर्निगद्यते।

**५. अर्चनम्–** श्रद्धया सादरञ्च भगवत: स्वरूपाणाम् पूजनमेव भवति अर्चनभक्ति:।

**६. वन्दनम्–** सृष्टौ आकाश–जल–वायु–अग्नि–पृथ्वी–चराचरप्राणि–सर्वदिग्–वृक्षादीन्नपि सर्वान् विराट्–पुरुषस्य श्रीहरे: शरीरम् मत्वा तेषां सर्वेषामपि वन्दनाकरणं तथा कञ्चिदपि प्राणिनं किञ्चिदपि वस्तु वा श्रीहरेरतिरिक्तं नहि वेदनीयमेव भवति वन्दनभक्ति:।

**७. दास्यम्–** भगवत: सेवको भूत्वा कायेन, वाचा, मनसा, इन्द्रियादिभिश्चसर्वतोभावेनतस्मिन्नेवस्वस्यसंयोजनमेवभवति दास्यभक्ति:।

**८. सख्यम्–** भगवता सह मैत्रीभावं संस्थाप्य नि:सङ्कुचितभावेन स्वकीयानां हृदिस्थानां सर्वेषामपि गुणदोषादीनां तत्सम्मुखे प्रकटीकरणं सख्यभावरूपा भक्तिर्ज्ञायते।

**९. आत्मनिवेदनम्–** भगवान् सर्वान्तर्यामी सर्वज्ञश्चास्ति। तदर्थं किञ्चिदपि गोपनीयं नास्ति। अतो भगवत: सम्मुखे भक्तद्वारा स्वकीयसर्वस्वमपि अनावृतरूपेण स्थापनम् आत्मनिवेदनभक्ति: कथ्यते।



इत्थं नवधाभक्तिनिरूपणं पुराणादिषूपलभ्यते। एषां श्रवणादीनाम् नवविधानामपि भक्तीनाम् भगवत्प्राप्तिरेवाऽस्ति प्रयोजनम्। उक्तञ्चाऽपि–

**श्रीविष्णो: श्रवणे परीक्षिदभवत् वैयासिक: कीर्तने।**
**प्रह्लाद: स्मरणे तदङ्घ्रिभजने लक्ष्मी: पृथु: पूजने।।**
**अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुन:।**
**सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां फलम्।।**[३]

भक्त्या मम प्राप्ति: सुगमा इति श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेन भूयो–भूय: कथितम्। तथाहि–

**भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत:।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।।**[४]

अर्थात् पराभक्तिद्वारा भक्त: भगवन्तं तत्त्वतो ज्ञात्वा तस्मिन् प्रविष्टिम् अवाप्नोति।

ज्ञानयोगिन: कर्मयोगिनश्च स्वकल्याणम् उद्दिश्य साधनां कुर्वन्ति किन्तु भक्तियोगिन: स्वकल्याणमनपेक्ष्य भगवत्प्राप्तिम् प्रत्येव गच्छन्ति। अतस्तेषां कल्याणस्य कृत्स्नं दायित्वम् भगवत्येव भवति। भगवत: कृते भक्ति: इत्थम् प्रियतमाऽस्ति यत् भगवन्तमेव सर्वस्वं मन्यमानानां भक्तिनिष्ठभक्तानां सम्पूर्णं दायित्वं स: भगवान् स्वमेव निर्वहति। तथाहि–

**मच्चित्ता मद्गतप्राणा: बोधयन्त: परस्परम्।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च।।**

३. रामरहस्योपनिषद्–१३/१८.    ४. श्रीमद्भगवद्गीता–१८/५५.

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**

**ददामि बुद्धियोगं तं येन मामुपयान्ति ते।।**

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः।**

**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता।।**[५]

गीतायाः भक्तियोगे एव ज्ञानयोगः कर्मयोगश्च सन्निहितौ दृश्येते। तद्यथा–

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते।**

**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते।।**[६]

अर्थात् यः अव्यभिचारिभक्तियोगेन श्रीभगवन्तं सेवते सः गुणातीतो भूत्वा भगवत्प्राप्त्यर्हो जायते। ज्ञानयोगेन केवलं पराभक्तेः अर्थात् प्रेम्णः प्राप्तिः कर्मयोगेन च केवलं ज्ञानस्य प्राप्तिः भवति। किन्तु भक्तियोगेन भगवद्दर्शनम् भगवत्तत्त्वज्ञानं भगवत्तत्त्वे प्रवेशनञ्चेत्येतेषां त्रयाणामपि प्राप्तिः भवति। तथोक्तम् श्रीमद्भगवद्गीतायाम्–

**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।**

**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप।।**[७]

अर्थात् अनन्यभक्तिद्वारा एव भगवान् ज्ञेयः द्रष्टव्यः लभ्यश्चाऽस्ति। भक्तिहीना मानवाः जलहीनबलाहका इव भवन्ति, इति गोस्वामितुलसीदासेन प्रतिपादितम् स्वकीयकृतौ 'रामचरितमानसे'। तथाहि–

५. वही, १०/९-११. ६. श्रीमद्भगवद्गीता-१४/२४.
७. वही- ११/५४.



**भगतिहीन नर सोहई कैसा। बिनु जल बारिद देखिअ जैसा।।**[८]

श्रीमद्भगवतः प्रीत्यर्थम् आचरण–वयो–विद्या–जाति–पौरुष–रूप–धनादीनां काचिदपि अपेक्षा नहि भवति। भगवतो भक्तिप्रिय–भूतत्वात् तत्प्रीतये तु भक्तिरेव सर्वोत्तमः साधनः। उक्तं यथा सूक्तीनां सङ्ग्रहात्मके ग्रन्थे सूक्तिसुधाकरे–

**व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का।**

**का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम्।।** शिष्टं पृ.१०० इत्यम् प्रष्टव्यम्

**कुब्जायाः किमु तत्र रूपमधिकं किन्तत् सुदाम्नो धनम्।**

**भक्त्या तुष्यति केवलं परमया भक्तिप्रियो माधवः।।**[९]

इत्थं गीतादिग्रन्थेषु पुराणादिषु च भगवतः प्राप्तये भगवद्भक्तिमहिमा सगौरवं वर्णिताऽस्ति।

निष्कर्षतः वक्तुं शक्यते यत् भगवतः प्राप्तये प्रीतये च सर्वसाधनेषु भक्तिरेवस र्वथास रलतमंश्र ेष्ठतमञ्च स ाधनमस्ति।अ त:स त्यमेव निगदितमस्ति–'' **भक्तिप्रियो माधवः** ''

८. श्रीरामचरितमानस-३/३५/३. ९. सूक्तिसुधाकर.

ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कौ-४;१

# निपातननिर्वचनम्

**डॉ. प्रियव्रतमिश्रः**
सहायकाचार्यो व्याकरणविभागे,
श्रीरामसुन्दरसंस्कृत-विश्वविद्याप्रतिष्ठानम्, रमौली,
(आदर्श-संस्कृत-महाविद्यालयः), दरभङ्गा-८४७२०१ (बिहारम्)

**महर्षिपाणिनिना प्रकल्पितेषूपायेषु ''निपातनम्' इति विशिष्टस्थानमधिरोहति शास्त्रेऽस्मिन्। यतोहि प्रकृतिप्रत्यय-कल्पनात्मके शास्त्रे निपातनमित्यतिरिक्तः कश्चन विषयविशेषः। ते ते शब्दाः तथैव साधवो भवन्ति यथा आचार्यैरुपदिष्टाः प्रकृतिप्रत्ययप्रक्रियासंरचनं विनापि। तत्र निपातनस्य किं स्वरूपम्? षड्विधेषु सूत्रेषु निपातनं कुत्रान्तर्भवति? निपातनस्य किं कार्यम्? प्रयोजनञ्च किम्? विधिनिपातनयोर्भेदः कः? भाष्यकैयटयोः किम्मतमत्रेत्येते विषयाः यथाशास्त्रं शोधपत्रेऽस्मिन् विविच्यन्ते।**

**कुजि शब्दाः- ''निपातनम्, बाधकम्, विकल्पार्थः, देश्याः, अधिकार्थ-विवक्षा।''**

**वाङ्मुखम्-**

सुरगिरा निर्दुष्टवाग्व्यापारविधानाय काव्यरसपानाय सदसद्विचार-प्रवर्त्तकशास्त्रावबोधायास्ति पाणिनीयव्याकरणस्य महत्त्वं सर्वसम्मतं मतम्। तदिदं पाणिनीयव्याकरणं काले काले चमत्करोति चित्तं स्वप्रणयनशैल्या। उपचतुस्सहस्रं सूत्रैः कृत्स्नं शब्दसंसारं निर्दुष्टं प्रस्तावयत्यस्माकं पुरस्तादित्यहो! बुद्धिवैशाल्यमाचार्यस्य। अत एव काशिकाकारोऽप्याह- ''महती सूक्ष्मेक्षिका वर्त्तते आचार्यस्य''[१] इति। तथाविधा व्यवस्थाः

१ काशिका-४-२-७४



पाणिनिना शास्त्रेऽस्मिन् प्रकल्पिताः यथाञ्जसा शास्त्रमिदं सकलं शब्दजालंप्रकटयति।तत्र निपातनानां महत्त्वं शास्त्रेऽस्मिन्भृशं समचर्चि। निपातनं नाम यत्र सूत्रैः प्रकृतिप्रत्ययविभागपुरस्सरं शब्दाः न निष्पद्यन्ते प्रत्युत वाङ्मये तत्तादृशाः शब्दाः प्रयुक्ताः तान् शब्दान् निपातनेन साधयति पाणिनिः।

**निपातनविधेः स्वरूपम्-**

पाणिनेः षड्विधेषु सूत्रेषु विधिसूत्रं प्राधान्यमावहति। विधिसूत्रञ्च त्रिविधम्-उत्सर्गविधिः, अपवादविधिः, निपातनविधिश्चेति। तत्र सामान्येन यो विधिः स उत्सर्गविधिरित्युच्यते। विशेषेण यो विधिः स च अपवाद इत्युच्यते। निपातनम् तु रूढ्यर्थे भवति। आचार्याणां विशिष्टशब्दप्रयोगो निपातनपदवाच्यो भवति। सूत्रेणानुपपन्नोऽप्याचार्येण सूत्रादिषु व्यवह्रियमाणशब्दो निपातनात् सिद्ध्यति। तदुक्तं काशिकायाम्[२]- यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम्।तथाहि-

''छन्दसि निष्टर्क्य-देवहूय-प्रणीयोन्नीयोच्छिष्य-मर्यस्तर्या-ध्वर्य-खन्य-खान्य-देवयज्या-पृच्छ्यप्रतिषीव्य-ब्रह्मवाद्यभाव्य-स्ताव्योपचाय्य-पृडानि[३]'' इति सूत्रेण वेदे एते शब्दाः निपात्यन्ते। निष्टर्क्यादयः शब्दाश्छन्दसि विषये निपात्यन्ते इति तद्वृत्तिः। तत्र चोक्तम्-''यदिह लक्षणेन अनुपपन्नं तत्सर्वं निपातनात्सिद्धम्। यथा-''निष्टर्क्य'' इति प्रयोगः-''कृती छेदने'' इत्यस्मान्निस्पूर्वात् क्यपि प्राप्ते ण्यत्, आद्यन्तविपर्ययः, निसश्च षत्वं निपात्यते। ''निष्टर्क्यं चिन्वीत पशुकामः''। एवञ्च उपर्युक्तशब्दाः तथैव बोध्याः। अनेन त्वैतत्सिद्धं सूत्रेण यन्न सिद्ध्यति तन्निपातनेन सिद्ध्यति। अत एव अन्यथा प्राप्तस्यान्यथोच्चारणं निपातनमित्यपि प्रवादः। निपातनानि च बाधकान्यपि भवन्ति। तद्यथा ''सर्वादीनि सर्वनामानि''[४] इति सूत्रे भाष्ये ''सर्वनामानि'' इत्यत्र ''न''कारस्य णत्वं प्राप्तं

२ का.-३-१-२३ ३ तत्रैव ४ म. भा. १-१-२७

“पूर्वपदात्संज्ञायामगः[5]” इति सूत्रेण अतः तस्य प्रतिषेधो वक्तव्य इति शङ्का प्रकटिता। तत्र समाधानवार्त्तिकेन “सर्वनामसंज्ञायां निपातनाण्णत्वाभावः” इत्युक्तम्। ननु किन्नाम निपातनमिति जिज्ञासायां यथा प्रतिषेधः तथा निपातनमिति। कस्तर्हि प्रतिषेधः? इति चेत् अविशेषेण किञ्चि दुक्त्वा विशेषेण “न” इत्युच्यते तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते “इदं न भवतीति” समाहितम्। तदा समाधानभाष्येऽपि इत्थमेवोक्तं निपातनमप्येवंजातीयकमेव। अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते “इदं न भवतीति”। एवञ्च सिद्धान्तितसमाधानभाष्ये इत्थमेवोक्तं “बाधकान्येव हि निपतनानि भवन्ति”। निपातनञ्च रूढ्यर्थमपि भवतीति “**राजसूय........**”[6] इत्यादिसूत्रे तत्त्वबोधिन्यां प्रतिपादितम्।

निपातनविधेः कार्याणि–

निपातनात् त्रिविधं कार्यं सम्पद्यते। अप्राप्तेः प्रापणम्, प्राप्तेर्वारणम्, अधिकार्थविवक्षा च। अत एवोक्तं पाणिनीयव्याकरण-स्यानुशीलनमिति ग्रन्थस्य कर्त्रा–

अप्राप्तेः प्रापणं चापि प्राप्तेर्वारणमेव वा।

अधिकार्थविवक्षा च त्रयमेतन्निपातनम्।।[7]

क्रमेणोदाहरणान्यत्र प्रस्तूयन्ते–

पाणिनेरनुसारेण अतिपूर्वकात् शीङ्धातोर्ल्युटि “अतिशयनम्” इति रूपेण भाव्यं परञ्च “अतिशायने तमविष्ठनौ”[8] इति सूत्रे तेन स्वयमेव ‘अतिशयनम्’ इति स्थाने ‘अतिशायनम्’ इति शब्दः प्रयुक्तः। अतः एवात्र “अतिशायनम्” इति शब्दो निपातनात् दीर्घत्वेन साध्यते। अत्र प्रमाणं भाष्याकाराणामिदं वचनमेव–“देश्याः सूत्रनिबन्धाः क्रियन्ते अतिशयनमतिशायनं प्रकर्षः निपातनात् दीर्घः।[9]

५ अ.८-४-३ ६ वै.सि.कौ.२८६५

७ पा.व्या.अ.पृ.१०३. ८ म.भा.५-३-५५. ९ तत्रैव



अत्र केनापि सूत्रेणाप्राप्ते दीर्घो निपातनत् विधीयते। तत्र “अतिशायने तमविष्ठनौ” इति सूत्रे भाष्ये अतिशायन इत्युच्यते–किमिदमतिशायन इति? तत्र प्रदीपे प्रश्नस्याशयं स्पष्टयति–किमयं ण्यन्तस्य निर्देश आहोस्विदण्यन्तस्य, कश्चेह शेत्यर्थ इति सन्दिहानः पृच्छति। तदा देश्याः सूत्रनिबन्धाः..... इत्युच्यते तस्या चाशय इत्थम्–

देश्याः=साधुत्वेन प्रतिपाद्याः एते सूत्रे निबधन्ते प्रसङ्गेन साधुत्वप्रतिपादनार्थं, ततो निपातनाद् दीर्घत्वमित्युक्तं भवति।[10] अनेन भाष्यकैयटेन एतत्तु स्पष्टं यत् इतरसूत्रेणाप्राप्तो दीर्घो निपातनात् विधीयते इति। इत्थञ्च निपातनस्य प्रथमं प्रयोजनम्–अप्राप्तेः प्रापणम्।

प्राप्तेर्वारणं तावत् द्वैतीयीकं कार्यं निपातनस्य। तद्यथा–“अवद्यम्” इति पदम् “अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु”[11] इति सूत्रेण निपात्यते। अत “वदः सुपि क्यप् च” इति सूत्रेण यत्क्यपोः उभयोरेव प्राप्तयोर्निपातनात् यदेव भवति सोऽपि गर्हायामेव। तदुक्तं दीक्षितेन “वदेर्नञुपपदे वदः सुपीति यत्क्यपोः प्राप्तयोर्यदेव सोऽपि गर्हायामेवेत्युभयार्थं निपातनम्” इति। एवञ्च प्राप्तस्यात्र निपातनेन वारणमिति द्वितीयं प्रयोजनम्।

तार्त्तीयीकं प्रयोजनं तावत् अधिकार्थविवक्षा। तद्यथा यत्र प्रत्ययानुसारेण निपातितशब्दार्थो न घटते तत्र निपातनत्वेन तदर्थाभ्युपगमोऽपि भवति। यथा– अध्यारूढशब्दात् “अधिकम्”[12] इति सूत्रेण निपातत्वात् कन्प्रत्यये उत्तरपदलोपे च “अधिकर्म” इति शब्दो निष्पद्यते। अध्यारूढशब्दः कर्त्तुः कर्मणो वा वाचकः। अतस्तत्स्थाने निपातितोऽधिकशब्दोऽपि तदर्थक एव। स चार्थः “अधिको द्रोणः खार्याम् अधिका खारी द्रोणेव इत्यादिषु प्रयोगेषु परिलक्ष्यते। अयमर्थावगमोऽपि विषयभेदे भवति न तु

१० म.भा.प्र.५-३-५५. ११ वै.सि.कौ.२८४९

१२ अ.५-२-७३

समानार्थे। यदि पुनरधिशब्दात् समाधानक्रियावचनात् कन् निपात्यते तदा कर्त्तुकर्मणोरन्यतरस्यैवाभिधानं प्राप्नोति। अध्यारूढशब्दस्तु उभयार्थ इति तस्यैवेदमङ्गीकृतसाधनभेदे निपातनमुचितम्। तदुक्तं कैयटेन लौकिकप्रयोगे अधिकशब्देन विषयभेदेन कर्त्तृकर्मणो-रभिधानदर्शनादङ्गीकृतसाधनभेदेमध्यारूढस्येदं निपातनं स चोभयार्थ इति न कश्चित् दोषावसर[१३]:''। तदेवमत्र निपातन-बलेनार्थद्वयस्यावगमो भवति-कर्त्तुः कर्मणश्च। एवं क्रमेणाधिकार्थ-विवक्षा निपातनेन साध्यते।

कदाचिच्च विकल्पार्थोऽपि निपातनं भवति। अत एवोक्तं काशिकायाम्- ''विकल्पार्थं निपातनम्'' इति। तदित्थम्- ''वा दान्तशान्तपूर्णदस्तास्पष्टच्छन्नज्ञप्ताः''[१४] इति सूत्रे दम्, शम्, पुरी, दस्, स्पश्, छद्, ज्ञप् इत्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते। दान्तः, दमितः इत्यादीन्युदाहरणानि। अत्र इट्प्रतिषेधो णिलुक्च निपात्यते। ज्ञपेस्तु भरज्ञपिसनामिति विकल्पविधानात् यस्य विभाषेति नित्ये प्रतिषेधे प्राप्ते **विकल्पार्थं निपातनमिति**।

**निपातनविधेः प्रयोजनम्-**

निपातनाद् विभिन्नविधीनां सम्पादनं भवति। तदुक्तं प्रदीपे- अनेकप्रयोजनसम्पत्तिर्निपातनाद्भवतीति। तत्र ''तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्युपमानाव्ययद्वितीयाकृत्याः''[१५] इति सूत्रे सिद्धान्त-वार्त्तिकं ''निपातनात्सिद्धम्'' इत्यवतीर्णम्। तत्र किं नाम निपातनमिति जिज्ञासायाम् ''अनेकप्रयोजनसम्पत्तिर्निपातनाद्भवतीति कैयटेन प्रावादि। निपातनात् शब्दनिष्पत्तौ सूत्रीयशब्देषु च लाघवं जायते। समाने अहनि इत्यर्थे ''सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः''[१६] इति सूत्रेण निपातनाद् समानस्य सभावो द्यश्च प्रत्ययो भवति।

१३ म.भा.प्र.५-२-७३ १४ का.७-२-२७
१५ म.भा.६-२-२ १६ वै.सि.कौ.२६७३



निपातनाभावे तु समानस्य सभावो द्यश्चाहनि इति सूत्रनिर्देश आवश्यकः। निपातनादल्पप्रयत्नेनाप्यधिकार्थलाभो भवतीति ''अधिकम्'' इति शब्दनिपातने दर्शितमेव।

**विधिनिपातनयोर्भेदः-**

विधिसूत्रेषु प्रकृतिप्रत्ययादीनां निर्देशो भवति, निपातनसूत्रेषु सिद्धशब्दानाम्। तदुक्तं प्रदीपे-विधिनिपातनयोश्चायं भेदो यत्रावयवा निर्दिश्यन्ते समुदायोऽनुमीयते स विधिः, यत्र तु समुदायःश्रूयतेऽवयवाश्चानुमीयन्ते तन्निपातनम[१७]''। तद्यथा- पङ्क्तिविंशति........[१८] इति सूत्रेण विंशत्यादयः शब्दाः निपात्यन्ते। भाष्ये चेत्थमुक्तम्-इमे विंशत्यादयः सप्रकृतिकाः सप्रत्ययकाश्च निपात्यन्ते। तत्र न ज्ञायते का प्रकृतिः? कश्च प्रत्ययः? इति। कैयटेन च अथ प्रकृतित्वमेषां कस्मान्न विज्ञायते? पञ्चम्याः प्रत्ययस्य चानुपादानात्, अनिष्पन्नस्य च प्रकृतित्वाभावात्। प्रत्ययत्वं तर्हि कस्मादेषां न भवति? लोके केवलानां प्रयोगादर्शनात्। ''शताच्च ठन्यतावशते''[१९] ''विंशत्यादिभ्यः'' इति शास्त्रे च केवलानामुच्चारणात्। विधिनिपातनयोश्चायं भेदो यत्रावयवा निर्दिश्यन्ते समुदायोऽनुमीयते स विधिः, यत्र तु समुदायः श्रूयते अवयवाश्चानुमीयन्ते तन्निपातनमिति।

एवञ्च निपातनविषये इह मनाक् विहङ्गवीक्षणं व्यधायि यथाशास्त्रमित्यलं पल्लवितेन।

१७.म.भा.प्र.५-१-४९ १८.तत्रैव १९.वै.सि.कौ.१६८६

ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कौ-४;१

# माघे सन्ति त्रयो गुणाः

श्री मुकेशकुमारः
(विकाससहायकः)
हरियाणा-संस्कृत-अकादमी, पञ्चकूला-१३४११३

संस्कृतंसाहित्यस्य समुज्ज्वलहीरकः महाकविः माघः शिशुपालवधस्य रचनां कृतवान्। इदम् एकं विशालं महाकाव्यं विद्यते। इदं महाकाव्यं विंशतिसर्गेषु उपनिबद्धम् अस्ति। भारतीया आलोचकाः महाकवेः माघस्य प्रशंसां कुर्वन्तः व्यलिखन् यत् काव्यस्य क्षेत्रे महाकविकालिदासस्य उपमा, भारवेः अर्थगौरवं, दण्डिनश्च पदलालित्यमिति सर्वोत्कृष्टं वर्तते, परञ्च माघस्य कवितायां काव्यस्य आसां तिसृणामपि विशेषतानां समन्वितरूपं दृश्यते। उपर्युक्तानां विशेषतानां सन्निवेश-कारणेन निःसंशयः माघः महान् कविः अस्ति। महाकविर्माघः सुरगवी-काव्याकाशे विद्योतमानं स्वप्रभानिरस्तान्यतेजः-प्रसरम् अनुपमं नक्षत्रम् विद्यते। तस्यापूर्वा कान्तिः समग्रमपि वाङ्मयं रोचयतितमाम्। तस्य विविधशास्त्रावगाहिनी सूक्ष्मेक्षिका प्रतिभा सुसूक्ष्मपि तथ्यम् आत्मसात्कृत्वा पुरः स्फुरदिव प्रस्तौति। कविरयं न केवलं काव्यशास्त्रस्यैव पारदृश्वा, अपितु व्याकरणशास्त्रस्य, राजनीतेः, अर्थशस्त्रस्य, धर्मशास्त्रस्य, कामशास्त्रस्य, दर्शनशास्त्रस्य, ज्योतिषशास्त्रस्य, संगीतस्य, पाकशास्त्रस्य, हस्तिविद्यायाः,



नीतिशास्त्रस्य च अनुपमो मनीषी आसीत्। उपर्युक्ताभिः तिसृभिरपि विशेषिताभिः विभूषितो माघः संस्कृत-साहित्याकाशे भास्कर इव भासते। महाकविमाघस्य भावपक्षः प्रबलः विद्यते, परञ्च कालिदासस्य तुलनायां माघस्य हृदयपक्षं नातिप्रबलम्। कालिदासस्य कृतिषु उपमा, भारवेः कृतौ अर्थगौरवं, दण्डिनश्च कृतौ पदलालित्यं विद्यते। एते त्रयोऽपि गुणाः माघे सातिशयं समुपलब्धाः भवन्ति। माघस्य उपमाः मञ्जुलाः एवं मनोहराः सन्तीति नात्र मनाग् अपि सन्देहावसरः- तथाहि-

**दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम्।**
**विपाकपिङ्गस्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव।।**[1]

श्रीकृष्णः नारदं हिमालयम् इव पश्यतीत्यस्य वर्णनं कुर्वता माघेन पद्येऽस्मिन् कमलकेसरवत्शोभायमानाः जटाः धारयन्तं तथा शरत्कालिकचन्द्रकान्तिसदृशीं कान्तिं धारयन्तं विपाकेन पीतवर्णमिव धारयन्तं पर्वतराजं हिमालयम् इव नारदं दृष्टवान् श्रीकृष्णः। अर्थगौरवस्य दृष्ट्या अपि माघः महान् वर्ततेः, सः भारवेः यशः मलिनं कर्तुमेव शिशुपालवधनामकं महाकाव्यं विरचितवान् इति प्रायोवादः। माघस्य पदशय्या अतीव मनोहरा अस्ति।

**माघस्य वैशिष्ट्यम्-**

विपश्चिद्भिः साहित्यकारैः महाकवेः कालिदासस्य कृतिषु उपमानाः प्राधान्यम्, भारवेः कृतौ किरातार्जुनीये अर्थगौरवस्य वैशिष्ट्यम्, दण्डिनः कृतौ दशकुमारचरिते पदलालित्यम,

१. शिशुपालवधम्।

महाकविमाघस्य कृतौ शिशुपालवधे त्रयाणामपि पूर्वोक्तानां गुणानां समन्वयं समीक्ष्य लिख्यते च-

**उपमा कालिदासस्य भारवेरर्थगौरवम्।**
**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः।।**

अनेन कथनेन एतदत्रावधेयं यद् महाकविमाघस्य त्रयाणामपि गुणानां शिशुपालवधे समाहारः विद्यते।

**माघस्य शैली-**

महाकवेर्माघस्य भावपक्षापेक्षया कलापक्षः प्रशस्यतरः। यद्यपि भावपक्षस्यापि मनोज्ञत्वं माधुर्यं हृद्यत्वं च प्रतिपदं दृश्यते तथापि नात्र कस्यापि सुधियो विप्रतिपत्तिः यन्माघः कलापक्षाश्रयणे कवीन् अन्यान् अतिशेते। क्वचित् अलंकारप्रयोगाः विशेषतश्चित्रालंकारप्रयोगाः, क्वचिद् व्याकरण-नैपुण्यम् कोमलकान्त-पदावल्याः संधानम्, क्वचित् शास्त्रीय-पाटव-प्रदर्शनम्, तस्य कलात्मिकायाः रुचेः परिचायिकानि सन्ति। महाकविर्भारविस्तस्य आदर्शरूपोऽभूत्। तस्य सरणिमनुसृत्य सोऽपि कलात्मक-पाण्डित्य-प्रदर्शने कृतमतिरभूत्। स्वोत्कर्षं साधयितुं स तदीयां सरणिम् अनुसृत्य तत्रोत्कर्षम् अवाप। कलापक्षाश्रयणे स न केवलं भारविमेव, अपि तु महाकविं भट्टिमपि अतिक्रामति।

**माघस्योपमा-वैशिष्ट्यम्-**

माघे सुरुचिपूर्णाः शतशः उपमाः समुपलभ्यन्ते। तत्र



क्वचित् शास्त्रीयं ज्ञानम्, अपरत्र काव्यगौरवम्, अनेकेषु स्थलेषु नीतिशास्त्रतत्त्वम्, इतरत्र च विविधविद्याविशारदत्वं तस्य गरिमाणं प्रथयति। संगीतशास्त्रस्य च महत्त्वं वैचित्र्यं चोपमया प्रकटयति यद् वाङ्मये कतिपये एव वर्णाः सन्ति; संगीतशास्त्रे च सप्त स्वराः, परं तेषामुपादानेन कथमिव वैचित्र्यजनकं शास्त्रम् उदेति-

**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।**
**अनन्तां वाङ्मयस्याहो गेयस्येव विचित्रता।।**[२]

भाग्यपुरुषकारयोर्द्वयोरपि परस्परापेक्षित्वम् अनिवार्यत्वेन स्वीकरणं च तथैवावश्यकं यथा सत्कवये शब्दार्थयोर्द्वयोरपि संग्रहः, उपमया साध्विदं विशदयति सः। यथा-

**नालम्बते दैष्टिकतां न निषीदति पौरुषे।**
**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।।**[३]

उपमाप्रयोगे काव्यशास्त्रीयं ज्ञानं संपुष्णता तेनोच्यते-
**स्थायिनोऽर्थे प्रवर्तन्ते भावाः संचारिणो यथा।**
**रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः।।**[४]

नीतिशास्त्रविदग्धतां विशदयता तेनोच्यते, यद् यथा स्वकल्याणेच्छुना केनापि वृद्धिं प्राप्नुवन् रोगो नोपेक्ष्यः तथैव एधमानोऽरातिरपि नोपेक्षामर्हति-

---

२. शिशुपालवधम्, २.७२.    ३. वही, २.८६.
४. वही, २.८७.

**उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।**
**समौ हि शिष्टैराम्नातौ वत्स्यन्तावामयः स च।।**[५]

स्वकवित्वस्य कल्पनामनोज्ञत्वस्य च संकलनं विदधता तेनोच्यते-

**अनुपतति विरावैः पत्रिणां व्याहरन्ती।**

**रजनिमचिरजाता पूर्वसन्ध्या सुतेव।।**[६]इति

महाकवेरस्य उपमा-प्रयोगे शास्त्रीयस्य पाण्डित्यस्यापि अपूर्वः समन्वयो दृश्यते। सांख्यदर्शनानुसारं पुरुषः उदासीनोऽकर्त्ता च, परं बुद्धिकृतकर्मणां फलभाग् भवति। तथैव साक्षिमात्रोऽपि कृष्णः सेनाकृत-विजयस्य फलभोक्ता भविष्यति। तथाहि-

**विजयस्त्वयि सेनायाः साक्षिमात्रेण ऽपदिश्यताम्।**
**फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि।।**[७]

उपमाप्रयोगे मनोज्ञायाः कल्पनाया अपि सदुपयोगः प्रशस्यः, कृष्णं दिदृक्षमाणायाः कस्याश्चिद् गोपिकायाः गवाक्षस्थितं वदनकमलम् उदयाद्रिकन्दरास्थिसुधांशुमण्डलमिव व्यराजत-

**अधिरुक्ममन्दिरगवाक्षमुल्लसत् सुदृशो रराज मुरजिद्दिदृक्षया।**
**वदनारविन्दमुदयाद्रिकन्दराविवरोदरस्थितमिवेन्दुमण्डलम्।।**[८]

---

५. शिशुपालवधम्, २.१०. ६. वही, ११.४०.
७. वही, २.५९. ८. वही, १३.१५.



नारदश्रीकृष्णयोः सितासिते कान्ती तथैवारोचतां यथा रात्रौ पत्रान्तरगोचराः सुधांशोर्मरीचयः-

**रथाङ्गपाणे पटलेन रोचिषाम् ऋषित्विषः संवलिता विरेजिरे।**
**चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशवः।।**[९]

**माघस्यार्थगौरवम्-**

माघेऽ यद्यप्यर्थगौरवं पदे-पदे प्रेक्ष्यते, तथापि द्वितीयः सर्गः सर्वातिशायी वर्तते। कतिपये एव श्लोका उदाहरणार्थम् अत्र प्रस्तूयन्ते। कृष्ण एव रक्षोनिकरं विनाशयितुं तथैव क्षमो यथा भास्करस्तमोनिचयम्-

**ऋते रवेः क्षालयितुं क्षयेत कः क्षपातमस्काण्डमलीमसं नभः।**[१०]

मनस्विता जीवनोन्नायिका मानहीनस्य जीवनं तृणमिव तुच्छम्। अनेकशो मनस्वितायाः स्वाभिमानस्य च गुणगौरवं वर्ण्यते कविना-

**पादाहतं यदुत्थाय मूर्धानम् अधिरोहति।**
**स्वस्थादेवापमानेऽपि देहिनस्तद् वरं रजः।।**[११]
**सदाभिमानैकधना हि मानिनः।**[१२]

**महाकविमाघस्य पदलालित्यम्-**

माघे पदलालित्यं पदे-पदे प्राप्यते। भाषायाः संगीतात्मकत्वं यथा-

---

९. शिशुपालवधम्, १.२१. १०. वही, १.३८.
११. वही, १.६७. १२. वही, १.३८.

**मधुरया मधुबोधितमाधवी-मधुसमृद्धितमसेधितमेधया।**
**मधु कराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे।।**[13]

यमकालंकारालंकृतभाषाश्रयणेन माधुर्यम्। यथा-

**नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपंकजम्।**
**मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः।।**[14]

भावानुसारि भाषाश्रयणेन सौकुमार्यम्। यथा-

**वदनसौरभलोभपरिभ्रमद् भ्रमरसंभ्रमसंभृतशोभया।**
**चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया।।**[15]

अतः 'माघे सन्ति त्रयो गुणाः' इयमुक्तिः समीचीनैव अस्ति।

---

१२. शिशुपालवधम्, १.३८. १३. वही, ६.२०.
१४. वही, ६.२. १५. वही, ६.१४.



ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कौ-४;१

# उत्तरनैषधीयचरिते रसयोजना

**डॉ. विवेकशर्मा**
सहायकाचार्यः, संस्कृतविभागः,
हिमाचलप्रदेश-केन्द्रिय-विश्वविद्यालयः,
धर्मशाला।

संस्कृतसाहित्ये रसस्य महत्त्वं सर्वोपरि विराजते। संस्कृतसाहित्यजगति तु रसस्य तादृशं एव महत्व पूर्णतत्वं विद्यते यथा दधिषु नवनीतं, जनेषु विद्वांसः, वेदेषु आरण्यकम्, औषधीषु पीयूषं, जलाशयेषु सागरः श्रेष्ठतमो वर्तते एवञ्च काव्यसंसारे उत साहित्यजगति रस एवोत्कर्षरूपेण विराजतेतराम्। वैदिककालादारभ्य अद्यावधि ये केऽपि विद्वांसः जाताः ते सर्वेऽपि प्रकारान्तरेण रसस्य प्राधान्यं स्वीकुर्वन्ति। तद्यथा वर्णितं तैत्तिरीयोपनिषदि **रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति।** भगवता वेदव्यासेन अग्निपुराणे उक्तम्-**वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।** सर्वप्रथमं रसशब्दस्य सामान्यतः चतुर्षु अर्थेषु प्रयोगो भवति-

* मधुराम्ललवणादयोऽपि रसाः अनन्तरम् रसशब्देनैवोच्यन्ते।

* आयुर्वेदरसः * साहित्यरसः * भक्तिरसः

अत्र चतुर्धा विभक्तेषु रसप्रयोगेषु तृतीयकक्षायां काव्यस्य जीवनाधायकः साहित्यिकरसः समायाति। साहित्ये रसशब्दार्थस्तु

काव्यसौन्दर्यप्रतिपादितेष्वर्थेष्वास्वाद्यस्यान्तर्भावः स्पष्ट एव।

लौकिककाव्यस्योत्पत्तिः क्रौञ्चमिथुनस्य कारुण्य पूर्णेन प्रसङ्गेन वाल्मीकिरामायणरूपेण सञ्जाता। नाट्यशास्त्रस्य प्रवर्तकस्य भरतस्य रसव्याख्यानं तु विश्वप्रसिद्धमेव। तेषां रससूत्रमस्ति- **विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः** इति। यस्य व्याख्या प्रमुखतया श्रीभट्टलोल्लट, भट्टनायक, श्री शंकुक, अभिनवगुप्त पाठाचार्यैः चतुर्भिराचार्यैः कृता। एषा व्याख्या अलौकिका वर्तते। एतेषां सर्वेषां विदुषां च मतानां संकलनं एवञ्च सिद्धान्तभूतस्य अभिनवगुप्तस्य मतं रसव्याख्यानविषये अलौकिकमनुकरणीयञ्च वर्तते। काव्येषु नाटकेषु वा रसस्य प्राधान्यं भवति। यथोक्तं भरतमुनिना **'न हि रसादृते कश्चिदर्थः प्रवर्तते''।**

अधुना उत्तरनैषधीयचरितस्य रसयोजनां मधिकृत्य किञ्चिद् लिख्यते- अत्र प्रथमं विषयमाधकृत्य विचार्यते, तथापि सर्वप्रथमस्ति **शृङ्गाररसः**। वस्तुतस्तु विश्वनाथानुसारं महाकाव्ये शृङ्गार-वीर-शान्तरसेषु एकः रसः अङ्गिरूपेण अन्ये च अङ्गरूपेण भवन्ति। ध्वन्यालोककारोऽपि मतमिदं स्वीकरोति। उत्तरनैषधीयचरितस्य अनुशीलनेन स्पष्टं यत् अस्मिन् महाकाव्ये शृंगार एव कविना अङ्गिरूपेण प्रयुक्तः। तथा-

**साऽभ्यवादत पदेऽपि च पत्तुं संगतोरसि दृशावमिमीलत्।**[१]
**कान्तकान्तपुलकाङ्गतरङ्गे सिक्तमेव सुधया स्वमबुद्ध।।**

* **अत्र वीररस प्रधानं विधते-** धनञ्जयः वीररसस्य लक्षणं कुर्वन् कथयति यत् वीरश्च चतुर्धा-दान-दया-युद्ध-धर्मैस्तूपाधेरुत्साहस्य

१. उ. नै. २१.१६.



चतुर्विधत्वात्। अर्थात् वीररसः चतुर्विधो भवति-

***धर्मवीरः, *दानवीरः, *दयावीरः, *युद्धवीरः**

तथाहि वीररसस्य उदाहरणमत्र प्रस्तूयते-

**दरीदुरन्ते मुखगह्वरे हरेः बलाद्विशन्तीमबलां समुज्ज्वलाम्।**[२]
**विलोकमुद्धर्त्तुमना क्षुरं शये नयन्नधावत् मृगजीवनः शयुम्।।**

अय स्थायीभावस्य आश्रयः उत्साहयुक्तः व्याधः। आलम्बन-विभावः शत्रुःभुजङ्गः, उद्दीपनविभावः, हस्तिनः क्षुरः, मति-दीप्ति-गर्भाश्च सञ्चारिभावाः। कानिचन अन्यान्युदाहरणान्यपि इत्थं भवन्ति-

**जाने सुदूरेऽवधतो विदर्भा जाने वृतिः श्वश्च विदर्भजायाः।**
**किं तेन चेदिच्छसि तत्र यायाः सन्त्वत्र देवास्तव ते सहायाः।।**
**अहं त्वदर्थं प्रयते यतेरन् अश्वा, विवस्वानपि साक्षिभूतः।**
**भुक्तस्य देयं लवणस्य देयं कृते मया निकृतये तथाश्वैः।।**
**अश्वेऽनुकूले सति दैवमूले विधौ विधौताघकुले कुलेऽस्मिन्।**
**समर्थबाहो मयि बाहुके स्यान्न सार्थकं किं नरदेव! लोके?**
**धराधरेयं तव तुंगसप्तेः प्रधावतः का नरसप्तसप्ते!**
**घटीभिरेवं कियतीभिरेव घटेत यात्रा तव लक्ष्यमात्रा।।**[३]

***करुणरसः-**

करुणरसस्य स्थायिभावः शोको भवति। यदा प्रियमरणं जायते तदा चित्तेया व्याकुलता आयाति, सैषा स्वाभाविकी व्याकुलतैव शोकः उक्तमपि-

**इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्।**

२. उ. नै. १८८. ३. उ. नै. ८: ६९-७३.

यस्य कृते शोकः क्रियते सः आलम्बनः। तस्य दाहादि क्रियाः उद्दीपनभावः, दैवनिन्दा-क्रन्दनादयः अनुभावाः, मोह-व्याधि-ग्लानि-विषादादयः व्यभिचारीभावाः भवन्ति। तद्यथा-

**मृगेश्वरे मूकति वाग्यते गिरौ ह्रिया प्रियाप्तिप्रतिबन्धकुण्ठिता।**[४]
**प्रचक्रमे क्रन्दितुमेव भीमजा क्षितौ लुठन्ती नलनाम्नि लुण्ठिता।।**

*** भयानकरस-**

भयानकरसस्य स्थायिभावः भयम्। कस्यापि भयङ्करवस्तुनः दर्शनाद् अन्यस्मात् कारणात्वा हृदये या विकलता भवति सा चित्तवृत्तिः भयमित्युच्यते-

**भयानकोभयस्थायी भावो कालाऽधिदैवतः।**
**स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः।।**
**यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्।**
**चेष्टा घोरतरा तस्य भवेदुद्दीपनं पुनः।।**

उत्तरनैषधीयचरिते प्रथमे एव सर्गे भयानकरस्य वर्णनम् अस्ति। यथा-

**अरण्यमेतद् घनमस्तपूषणं विनिर्गमं हिंस्रसहस्रभीषणम्।**
**चकास्ति सीमास्य पुलिन्दतुन्दिला ह्यनादिमध्यान्तमयाश्च कापथाः।।**[५]

अरण्य वार्णयन् व्याधः दमयन्तीं कथयति, अत्र सूर्यस्य रश्मयः अपि न प्रविशन्ति। सहस्रशः हिंसकपशवोऽपि यत्र-तत्र भ्रमन्ति। अस्मिन् वने पन्थानः कुपथाः सन्ति।

अस्मिन् श्लोके भयस्थायिभावस्य आश्रयः दमयन्ती, व्याध आलम्बनविभावः, एकान्तवनम् उद्दीपनविभावः, कम्पनादयः

४. उ. नै. १.१३३. ५. उ. नै. १.९२.



अनुभावाः, उग्रता-आवेगादयः व्यभिचारिभावाः सन्ति। एवं भयानकरसः सम्यग्रूपेण त्र प्रतिपादितः।

*** अद्भुतरसः-**

अद्भुतरसस्य स्थायिभावः विस्मयः। अलौकिकदर्शनम् उत अलौकिकश्रवणं वा उद्दीपनम्, रोमाञ्चादयः अनुभावाः, वितर्क-हर्षादयः व्यभिचारिभावाः। विलक्षणवस्तूनां दर्शनेन श्रवणेन च हृदये ये विकाराः उत्पद्यन्ते तेषामेव नाम विस्मयः। अस्य वर्णः पीतः, देवता च गन्धर्व उक्तमपिः-

**अद्भुतो विस्मयस्थायीभावो गन्धर्वदैवतः।**
**पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्।।**
**गुणानां तस्य महिमा भवेद् उद्दीपनः पुनः।**
**स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमाः।।**
**तथा नेत्रविकासाद्या अनुभावाः प्रकीर्तिताः।**
**वितर्कवेगसंभ्रान्तिहर्षाद्या व्यभिचारिणः।।**[क]

उत्तरनैषधीयचरितस्य एकादशसर्गे केशिनी दमयन्तीं बाहुकरूपिनलस्य विषये अद्भुततया वदति यत्-

**यद्येष कुत्रचन कामयते प्रवेष्टुं द्वारे लघावपि गुरूयति तन्न नौति।**
**चित्रं महत्यपि च वर्ष्मणि गह्वरेषु क्षुद्रेषु वेश्मसु च नश्यति तन्निनंस्त।।**[६]

प्रस्तुते श्लोके विस्मयस्थायीभावस्य आश्रयः केशिनी, आलम्बनविभावः नलस्य गुणाः, गह्वराणां लघुतायाः दर्शनम् उद्दीपनविभावः, रोमाञ्च-आवेग-हर्षादयः व्यभिचारीभावाः सन्ति।

६. उ. नै. ११.१०४. (क). संकेत जहाँ से लिया गया है।

अन्ये श्लोका अपि अद्भुतरसस्य प्रतिपादकाः काव्येऽस्मिन सन्ति यथा–

**मांसे सिसाधयिषते कृतसन्निधाना रिक्ता घटा अपि दृशैव तदैव पूर्त्ताः।**
**पूर्णा बभूवुरमलेन जलेन तूर्णं प्रक्षालनाय न जलाय जुहाव कश्चित्।।**
**नाग्निं तदार्त्तिथत पक्तुमयं स्वहस्ते धृत्वा तृणं दिनमणेः किरणं समाह्वयत्।**
**जज्वाल येन तृणजालमसौ सशौचं तत्राध्यशिश्रियददः पिशितस्य पात्रम्।।**
**नैनं स्पृशन्तमपि वह्निकणस्त्वधाक्षीत्तच्छन्दकन्दमुपहत्य न वार्यवाक्षीत्।**
**भूतद्वयेऽस्य वलवत्यनले जले च पूर्णं प्रभुत्वमिह कस्य न विस्मयाय।।**[७]

* **शान्तरसः–**

**निर्वेदस्थायीभावोऽस्ति शान्तोऽपि नवमो रसः।**

शान्तरसस्य स्थायीभावः निर्वेदः। अस्य अपरं नाम शमः भवति। शमस्य अभिप्रायो भवति–वैराग्यदशायाम् आत्मरत्या उत्पन्नानन्दः उक्तमपि–

**शान्तःशमस्थायीभाव उत्तमप्रकृतिर्मतः।**
**कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः।।**
**अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या।**
**परमात्मस्वरूपं वा तस्यालम्बनमिष्यते।।**
**पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः।**
**महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः।।**
**रोमाञ्चाद्याश्चाऽनुभावास्तथा स्युर्व्यभिचारिणः।**[क]
**निर्वेदहर्षस्मरणमतिभूतदयादयः।।**

मिथ्यारूपेण भाव्यमानं जगदेव शान्तरसस्य आलम्बनः, पवित्र–आश्रमः, तीर्थः, महापुरुषसङ्गादयः उद्दीपनविभावाः, रोमाञ्चादयः अनुभावाः,स् मृतिमत्यादयःव् यभिचारिभावाःस न्ति।उ त्तरनैषधीय–चरितस्य प्रथमे एव सर्गे अस्य रसस्य परिपाकः दृश्यते। यत्र दमयन्ती

७. उ. नै. ११.१०६–१०८.  (क) संकेत......



दिव्यतपोवने तपस्विभिः सह निवसति–

**विलोक्य दिव्यं विपिनं मुनीन् पुनः जलाशनान्वायुवशांश्च तापसान्।**
**जलं दलं प्राश्य दिनान्युपोष्य सा निजामवस्थामपि पर्यतूतुलत्।।**[८]

प्रस्तुते श्लोके दमयन्ती निर्वेदस्थायीभावस्य आश्रयः, तपोवनादि आलम्बनविभावः, मुनिभिः सह निवासादयः उद्दीपनविभावाः तथा च तैः सह साम्यं सञ्चारिभावो वर्तते।

* **रौद्ररसः–**

रौद्ररसस्य स्थायीभावः क्रोधः। विरुद्धप्रकृतियुक्त–जनानां कृते हृदये या प्रतिरोधस्य भावना उत्पन्ना भवति तस्या एव नाम क्रोधः उक्तमपि–

**रौद्रः क्रोधस्थायी भावो रक्तो रुद्राधिदैवतः।**
**आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्।।**[क]

अत्र शत्रुः आलम्बनः भवति। शत्रोः चेष्टादीनि उद्दीपनानि, शस्त्रोत्क्षेपणादयः अनुभावाः, तथा च मोह–अमर्षादयः व्यभिचारिभावाः सन्ति। उत्तरनैषधीयचरितस्य प्रथमे सर्गे रसस्यास्य परिपाकः दृश्यते–

**शृगालशावस्य तरक्षुकामिनी प्रणीतिलिप्सामिव जाग्रतीं रतिम्।**
**विनिन्द्य शार्दूलगिरा जगर्ज तं–न वाचमुच्चारय नीच! तां पुनः।।**[९]

अत्र यदा व्याधः दमयन्तीं प्रणयार्थं निवेदयति तदा दमयन्ती तं व्याधम् उच्चस्वरेण कथयति–

**न ते मुखाद् रे परदारलम्पट! च्युता धरायां रसना विवक्षतः।**
**सतीजनानामवहेलयोत्थितं किमर्चिरद्यापि न लोचने गतम्।।**
**न मे सहायः किमिदं विचिन्त्यते विचार्यते वा यदहं कुलाबला।**
**ऋतस्य सत्यस्य धरा वसुन्धरा बिभेति न क्षत्रियवंशपालिका।।**
**सती यदि स्यां पतिपादसेवका युवा न चान्यो मनसापि चिन्तितः।**
**शपे पतत्वेष परासुराशु मे दृशोः पुरस्तादधिभूमि पामरः**[१०] **।।**

८. उ. नै. १.१४५.  ९. उ. नै. १.९९.
(क). संकेत.......  १०. उ. नै. १.१००–१०२.

प्रस्तुते एव प्रसङ्गे रौद्ररसविषयकानि अन्यान्यपि उदाहरणानि प्रस्तूयन्ते-

अतः निष्कर्षरूपेण लेखितुं शक्यते यत् कविना गोस्वामिपं.-भैरवगिरिशास्त्रिणा उत्तरनैषधीयचरिते प्रायः सर्वान् रसान् प्रयुज्य शृङ्गाररसः अङ्गिरसरूपेण स्वीकृतः, तथा च अन्येषां रसानां प्रयोगः गौणरूपेण कृतः। भारतीयकाव्यशास्त्रिभिः महाकाव्ये विविधरसानां योजनायां विशेषतः लिख्यते। भामहस्य मतानुसारं महाकाव्ये प्रयुक्तानां सर्वेषां रसानां स्थितिः भिन्ना-भिन्ना भवति। आचार्यः दण्डी अपि भामस्य अस्य मतस्य समर्थनं करोति। परञ्च महाकाव्ये प्रायः यद्यपि सर्वे रसाः विद्यन्ते तथापि प्रधानरसः अथवा अङ्गीरसः एक एव भवति। आचार्यः विश्वनाथः महाकाव्ये शृंगार-वीर-शान्तरसेषु कमपि एकम् अङ्गिरूपेण स्वीकरोति तथा च अन्यान् शेषरसान् अङ्गरूपेण स्वीकरोति। तेनोक्तम्- **शृङ्गारवीर-शान्तानामेकोऽङ्गी रसः इष्यते। अंगानि सर्वेऽपि रसाः।**

अतः महाकाव्यस्य लक्षणानुसारं गोस्वामिना पं. भैरवगिरिशास्त्रिणा शृङ्गाररसः अङ्गिरूपेण उत्तरनैषधीयचरिते महाकाव्येप्रयुक्तःत थाव ीर-भयानक-रौद्रादिरसान् गौणरूपेण प्रयुज्य महाकाव्ये विभिन्नानां रसानां समावेशः कृतोऽस्ति। कविः नलस्य उदात्तचरित्रं प्रस्तुत्य शृङ्गाररसं प्रधानरूपेण स्वीकृत्य महाकाव्यस्यास्य उत्कृष्टतां प्रतिष्ठापयति तथा च अन्यान् गौणरसान् अपि समावेश्य रसदृष्ट्या काव्यस्य श्रेष्ठतां प्रस्तौति। अतः लेखितुं शक्यते यत् उत्तरनैषधीयचरितं महाकाव्यं शृङ्गाररसप्रधानेषु उत्कृष्टमहाकाव्येषु अन्यतममस्ति।



ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कौ-४;१

# उपनिषत्सु ब्रह्मस्वरूपम्

**डॉ. राकेशकुमारशर्मा**
राजकीय संस्कृत महाविद्यालयः,
सोलन (हि. प्र.) 173212

सकलसंसारस्य मूलतत्त्वं नित्यं शुद्ध-बुद्ध-मुक्त-स्वभावं सर्वज्ञं सर्वशक्तिसमन्वितं ब्रह्म वर्तते। एतदेव परमात्मा विश्वस्य जीवशक्तिः वर्तते। ब्रह्मणः स्वरूपम् उपनिषत्सु बहुधा प्रतिपाद्यते। इन्द्रियमनोबुद्ध्यादिभ्यः तस्य पार्थक्यम् उपनिषदि निगद्यते यत् इन्द्रियेभ्यः परा विषयाः, विषयेभ्यः परं मनः, मनसः परा बुद्धिः, बुद्धिभ्यः परो महान् आत्मा, महतः परमव्यक्तं, अव्यक्तात् परः पुरुषः परमात्मा विद्यते, ततः परं तु न किञ्चिदस्ति। तदेव अभेदं बोद्धव्यम् सर्वेषु प्रधानः, पराकाष्ठा, परागतिश्च[१]। तथाहि-

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः।।**
**महतः परमव्यक्तमव्यक्तात् पुरुषः परः।**
**पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः।।**

वेदेषु तदेष परमात्मा 'ओमि' ति पदेन व्याख्यायते। उपनिषत्सु तदेव ओम् पदवाच्यं तद् एव दर्शने ब्रह्म प्रोच्यते।

माण्डूक्योपनिषदि[२] तत्स्वरूपं निगद्यते यत्-

"ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवत्-भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव। श्रीमद्-

१ कठोपनिषद्- 1/3/10-11 २ माण्डूक्योपनिषद् 1

भगवद्गीतायां[3] ओमित्येकाक्षरं ब्रह्म इत्युच्यते।

ऋग्यजुःसामाथर्वादयः सर्वे वेदाः ब्रह्मस्वरूपं 'ऊँ' पदमेव प्रतिपादयन्ति। सर्वाणि तपांसि ओङ्कारमेव वदन्ति। गुरुकुलवासिनः वेदानुरागिणः यदिच्छन्तः ब्रह्मचर्यं चरन्ति तत्पदं ओमिति निगद्यते।[4]

'ऊँकार' स्वरूपं ब्रह्मतत्त्वं यः कोऽपि जिज्ञासति, यःकोऽपि मानवः तत् लब्धुं प्रभवति। तदर्थं तपस्या करणीया; सत्यानुरागः, बलिष्ठा निष्ठा, शुद्धं विमलस्य ज्ञानस्यावश्यकम्।

ब्रह्म ज्ञातुं प्रत्येकं जीवस्य कर्त्तव्यमिदं वर्तते यत् यः कायं वाचं मनश्च संयच्छेत्। किञ्च ब्रह्मणः साक्षात्काराय सत्यस्याचरणं करणीयम्। स्वकीयजीवने न कदापि कस्यापि वस्तुनः अपहरणम्, ब्रह्मचर्यस्य रक्षणम्, इन्द्रियाणां निग्रहणम्, हिंसायाः परित्यजनम्, देवातिथि-मातृपितृ-गुरूणां वन्दनम्, निन्दनीयकर्मपरिवर्तनं अन्तः-करणस्य परिक्षालनञ्च कर्त्तव्यम्।

यदा कस्यापि जीवस्य ब्रह्मविषयकं ज्ञानं भवति; तदा सः शुद्धान्तःकरण : साधकः ''अहं ब्रह्मास्मि'; 'तत्त्वमसि', सर्वं खल्विदं ब्रह्म' इत्येतत् साक्षात्भावेनानुभवति। अर्थात् 'ऊंकार'-स्वरूपम् अक्षरं ज्ञात्वा मानवः यत् किमपि संसारेऽस्मिन् इच्छ ति तदेव प्राप्नोति। यथोक्तं कठोपनिषदि-

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्।।**[5]

माण्डूक्योपनिषदि अन्यदपि उक्तं यत्-

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः**
**सर्वस्य प्रभवाप्ययौ हि भूतानाम्।**[6]

---

३ ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजनं देहं स याति परमां गतिम्।।गीता 8/13

४ कठोपनिषद् -1/2/15 ५. वही, -1/2/16 ६. माण्डूक्योपनिषद्- 6



अभेदं बोद्धयम् सोऽयं परमात्मा सकलचराचरजगतः स्वामी, सर्वव्यापकः, सर्वान्तर्यामी, सर्वेषां नियन्ता च वर्तते। परमात्मा एव प्रकाशानामपि प्रकाशः, तेजसां तेजश्च। न तत्र स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति न च चन्द्र-तारकादयः। अग्न्यादीनां तु का कथा। अस्य विषये श्वेताश्वतरोपनिषदि एवमुक्तम्-

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति।।**[7]

तात्पर्य विद्यते यत् साक्षात् ब्रह्मैव सर्वेषु शास्त्रेषु अमृतमुच्यते। यथोक्तं-

**य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः।**
**तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते।**
**तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन। एतद्वै तत्।।**[8]

ब्रह्मण एव एतत् सकलचराचरजगत् व्याप्तमिति। यथा ईशावास्योपनिषदि व्यदिश्यते-

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्।।**[9]

संसारेऽस्मिन् एकमेव ब्रह्म अग्नि-वायु-आदित्य-चन्द्रादि-रूपेण बहुधा स्तूयते। तदेव ब्रह्म विश्वस्वरूपं, सर्वदेवमयञ्च वर्तते। तेनैव सकलं विश्वमाच्छादितमस्ति। तदेव ब्रह्म विविधनामभिः ज्ञायते। यथोक्तम्-

**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।**
**तदेव शुक्रं तद्ब्रह्म तदापस्तत् प्रजापतिः।।**[10]

---

७ श्वेताश्वतरोपनिषद्, ६/१४ ८ कठोपनिषद्, २/८

९ ईशावास्योपनिषद्, १ १० श्वेताश्वतरोपनिषद्, ४/२

तस्मादेव समस्तमपि जगत् प्रादुर्भवति। मुण्डकोपनिषदि अस्य विषये एवमुक्तम्–

**यथोर्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा सतः पुरुषात्केशलोमानि**
**तथाक्षरात्सम्भवतीह विश्वम्।।**[११]

अतः सकलसंसारस्योत्पत्तिः ब्रह्मण एव भवति। संसारोऽयं ब्रह्मणः स्वरूपः वर्तते। यत्किञ्च जगत्यस्मिन् विद्यते तत्सर्वं ब्रह्मैव। यथोक्तं श्रीमद्भगवद्गीतायाम्–

**ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना।।**[१२]

ततः उपनिषदां निष्कर्षोऽयं वर्तते यत् तस्माद् ब्रह्मणः एव समग्रोऽपि संसारः समुत्पद्यते पुनश्चान्ततः तत्रैव लीयते। तद् ब्रह्म निर्गुण–सगुणभेदेन द्विविधम्। निर्गुणं ब्रह्म न वक्तुं शक्यम्। निर्गुणं ब्रह्म परमार्थदृष्ट्या सच्चिदानन्दस्वरूपम्। तदेव जगतः प्रकाशकम्। तदस्ति सर्वथैव वागगोचरम्। यथोक्तं केनोपनिषदि–

**यद्वाचानभ्युदितं येन वागभ्युद्यते।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते।।**[१३]

केनोपनिषदि[१४] एव इत्थं वार्णनमुपलभ्यते यत् निर्गुणं ब्रह्म मनसा न मनुते; चक्षुषा न दृश्यते; श्रोत्रेण न श्रूयते च। अत एव श्रुतयो नेति नेतीत्युक्त्वा तद्गायन्ति। कठोपनिषदि[१५] एवं प्रतिपादित यत् अशब्दम् अस्पर्शम् अरूपम् अव्ययम् अरसं नित्यम् अगन्धवत् अनादि अनन्तं महतः परं ध्रुवं च तमेव विज्ञाय तत्त्ववित्

११ मुण्डकोपनिषद्– १/७
१२ श्रीमद्भगवद्गीता –४/२४
१३ केनोपनिषद्– १/४
१४ केनोपनिषद्,१/५७
१५ केनोपनिषद्– १/१५



मृत्युमुखात् प्रमुच्यते। तत् निर्गुण–ब्रह्मणः सत्तयैव सूर्यचन्द्रादिकं प्रकाशते। तद् ब्रह्म अज्ञान–उपाधि–अवच्छिन्नं सगुण– रूपताम् आपद्यते। तदेव सगुणं ब्रह्म ईश्वर–विराट्–हिरण्यगर्भसंज्ञया व्यपदिश्यते।

सगुणत्वात् तत् पादाभ्यां चलति, मनसा चिन्तयति, वाचा वदति, हस्ताभ्यां कार्यं करोति, नेत्राभ्यां पश्यति, कर्णाभ्यां शृणोति च। अस्य विश्वस्य सर्वेऽपि प्राणिनः तस्यैव शरीरमिति कथयन्ति। तदेव नामरूपादिभेदेन नानादेवतारूपतामासादयति। ब्रह्मणः शक्त्यैव देवतासु शक्तिः सञ्च रति। तस्यैव शक्ति- भूतत्वेन जगतः सर्वे पदार्थाः शक्तिमन्तः जायन्ते। तस्य ब्रह्मणः अविद्योपाध्यवछिन्नं कारणशरीरं समष्टिरूपेण
'ईश्वरः' एव व्यष्टिरूपेण जीवो वा मन्यते।

अनित्ये लोकेऽस्मिन् एकं ब्रह्म एव नित्यम्। अतः स्वकीयजीवने ज्ञातव्यं ध्यातव्यञ्च तदेव। यतो हि ब्रह्मैव सर्वप्रधानं सर्वेषां वेदानां तपस्यानां ब्रह्मचर्यादिव्रतानां प्रयोजनं चेति निरूप्यते।

**सर्वे वेदाः यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्।।**[१६]

ब्रह्मज्ञानेनैव जीवनं शुद्धं शान्तं निरंजनं निरामयं विज्ञानमयं आनन्दमयं च जायते। तत एव जीवनस्य साफल्यं सार्थकत्वञ्च ।

ब्रह्म एव ज्ञेयं नित्यम्। नातः परं वेदितव्यम्। अतः संसारेऽस्मिन् सर्वेषां मानवानां मुख्यलक्ष्यं ब्रह्म प्राप्तिरेव अस्ति।

१६ कठोपनिषद्– १/२/१५

# राष्ट्रभक्तः बालगङ्गाधरः

**डॉ. शिवकुमारमिश्रः**
सेवानिवृत्तः संस्कृतविभागाध्यक्षः,
कुँवरसिंह महाविद्यालयः, लहेरियासराय
ल. ना. मि. विश्वविद्यालय, दरभंगा–८४६००३

बालगङ्गाधरः ख्यातः तिलकः तिलकायते।
सम्पूर्णभारतस्यास्य दिव्यप्रतिभदीप्तिमान्।।१।।
रसवाणाष्टचन्द्राब्दे पवित्रब्राह्मणस्य वै।
कुले जातो महाराष्ट्रे भविष्णुर्भास्वरः किल।।२।।
संस्कृतस्य महाज्ञानी वेदवेदान्तचिन्तकः।
ज्ञातासीदाङ्गलभाषायाः मराठ्या अपि सर्वथा।।३।।
चिन्तनानि विभिन्नानि जनानां ज्ञातुमिच्छया।
स्वीयानां चिन्तानां च अभिव्यज नयातया।।४।।
चिन्तनधनिना तेन सर्वतोमुखबुद्धिना।
मराठाकेसरीसंज्ञे पत्रिके द्वे प्रकाशिते।।५।।
स्वीकुर्वन् बौद्धधर्मं वै तात्कालिकीं प्रतिक्रियाम्।
संजातो जर्मनीदेशे मैक्समूलरसंज्ञकः।।६।।
मनीषी सर्वथा ख्यातः चिन्तनप्रतिभान्वितः।
एकादशं च पूर्वं वै शतकं खिष्टवर्षतः।।७।।



ऋग्वेदरचनाकालं निर्णीतवान् स्वतर्कतः।
सर्वतः प्रथमं विश्वे ऋग्वेदतिथिचिन्तकः।।८।।
आरोयनाभिधो ग्रन्थो लिखितस्तिलकेन वै।
ग्रन्थेऽस्मिन् विहितं तेन ऋग्वेदतिथिचिन्तनम्।।९।।
सम्प्रातो वै वसन्तस्य ऋग्वेदानुसारतः।।
मृगशिरोऽभिधं यद्वै नक्षत्रं किल वर्त्तते।।१०।।
तस्मिन्वसन्तसम्पातः एवमेव पुनर्वसौ।
ऋग्वेदस्यानुसारेण स्पष्टतो दृश्यते किल।।११।।
नवशताब्दपर्यन्तम् एकर्क्षे किल जायते।
अश्विन्यामधुना नूनं सम्पातोऽयं च दृश्यते।।१२।।
अतो गणनया स्पष्टम् ऋग्वदेरचना खलु।
षट्सहस्रसमाः पूर्वं संजाता नात्र संशयः।।१३।।
गुणौनागचन्द्राब्दे गणपतिमहोत्सवः।
राष्ट्रियोत्सवरूपेण तेनैवायोजितः किल।।१४।।
गोहत्यायाः विरोधाय तेन संघटिता इह।
समितयः प्रयत्नेन भारते किल वारिताः।।१५।।
शकौनागचन्द्राब्दे तिलकेन विशेषतः।
आयोजितः समारोहः सम्बद्धः शिवराजतः।।१६।।
आयोजितः समारोहः सर्वथैव विलक्षणः।
प्रेरितस्तिलकेनैव सार्वजनिक उत्सवे।।१७।।
लगुडभ्रामणं कर्तुं सोत्साहा युवकाः किल।
सभा वै देशभक्तानां सर्वथा राजनीतिकी।।१८।।

आयोजित्य च देशेऽस्मिन् मुक्तये आङ्गलशासनात्।
यस्मिन्नकाले महाराष्ट्रं दुर्भिक्षेणातिपीड़ितम्।।१९।।
पीड़ितानां च साहाय्यं कर्तुं स तत्परोऽभवत्।
कृता तेन व्यवस्था वै कोषस्यातिप्रयत्नत:।।२०।।
एतदर्थमुदासीन आसीदत्राङ्गलशासक:।
प्लेगरोगसमाक्रान्तं महाराष्ट्रमदृश्यत्।।२१।।
निवारणाय रोगस्य न प्रयत्न: कृतस्तथा।
आयुक्त: प्लेगरोगस्य पूनाया रैण्डसंज्ञक:।।२२।।
हत: केनापि संयोगाद् विशिष्ट: आङ्गलशासक:।
शैलौनागचन्द्राब्दे राजद्रोहापराधत:।।२३।।
कारागारेऽत्र संस्थातुं तिलको विवशीकृत:।
कारागारे च तेनात्र किंचित्काल: प्रयापित:।।२४।।
कारागाराच्च मुक्ताय तिलकाय पदे पदे।
राष्ट्रभक्तैर्जनैस्तत्र भव्यं स्वागतमर्पितम्।।२५।।
शरनभोचन्द्राब्दे यद्बङ्गस्य विभाजनम्।
गङ्गाधरेण वीरेण विरोधस्तस्य वै कृत:।।२६।।
विपिनचन्द्रपालेन गोखलेनायकेन च।
सहैव चिन्तनं कृत्वा सर्वथा व्यापकं किल।।२७।।
कल्याणार्थं च राष्ट्रस्य गम्भीरं सर्वतोमुखम्।
कृतमान्दोलनं तेन उग्रवादसमन्वितम्।।२८।।
शैलनभोचन्द्राब्दे सूरतस्याधिवेशने।
विभक्ते सति कांग्रेसे कांग्रेसाच्च बहिर्गत:।।२९।।



नागनभोचन्द्राब्दे राजद्रोहापराधत:।
माण्डले संज्ञके स्थाने षड्वर्षावधि सर्वथा।।३०।।
आदर्शनायको वीर: मनीषी चिन्तको महान्।
कारागारं स नीत: देशस्य तिलक: किल।।३१।।
पाण्डित्येन विशिष्टौ ग्रन्थौ लिखितौ च तेन अत्रैव।
गीतारहस्यं तथा आर्क्टिक होम ऑफ द वेदाज्।।३२।।
एनीवेसेण्टधीमत्या लोकमतानुसारत:।
होमरूलस्य सम्बन्धे देशकल्याणवाञ्छया।।३३।।
रसचन्द्रौचन्द्राब्दे आन्दोलनं च चालितम्।
बालगङ्गाधरेणैतत् सर्वथैव समर्थितम्।।३४।।
नभोनेत्रौचन्द्राब्दे तिलक: स दिवंगत:।
गाँन्धीमहोदयेनोक्तम् आसीत्स: सर्वथा महान्।।३५।।
निर्माता भारतस्यासीत् उद्घोषित: च तेन वै।
जन्मसिद्धाधिकारोऽस्ति अस्माकं वै स्वतन्त्रता।।३६।।
धन्योऽस्त्ययं महाज्ञानी राष्ट्रभक्तश्च सर्वथा।
संस्कृतस्य समुद्धर्त्ता सदा विजयतेतराम्।।३७।।
शिवकुमारमिश्रेण यथामति विवेचितम्।
संस्कृतस्य प्रचाराय राष्ट्रकल्याणवाञ्छया।।३८

।।इति शम्।।

ISSN-0975-4474 विश्वसंस्कृतम
पौष २०७६, चैत्र २०७७ वि.सं. वर्षः ५६-५७, अङ्कौ-४;१

# योगदर्शनाभिमते स्फोटवादः

**( आचार्यविज्ञानभिक्षुण : विशिष्टसन्दर्भे )**

सुरेन्द्रकुमार शर्मा (शोधछात्रः)
वी.वी.बी.आई.एस. एण्ड आई.एस.,
साधु आश्रमः, होश्यारपुरम्।

स्फोटवादस्य विवेचनं सर्वप्रथममस्माभिः पतञ्जलिकृत-महाभाष्ये प्राप्यते, स चैवास्य प्रथमाविष्कर्त्ताऽपि मन्यते। अतः स्वीयोत्कटमेधायाः परिचयं ददन् महर्षिपतञ्जलिः योगदर्शनस्यानु-शासनं कुर्वन्नपि योगसूत्रस्य तृतीयपादस्य संयमजन्य ( धारणा, ध्यान, समाधिः च) सिद्धीनां प्रकरणे शब्द-अर्थ-प्रत्ययानाञ्च इतरेतराध्या-ससन्दर्भे स्फोटतत्त्वविषये सङ्केतः कृतवान्।[1] योगसूत्रे निगूढमिमं सिद्धान्तं सूत्रव्याख्याकारेण व्यासेन, भाष्यव्याख्याकारेण वाचस्पतिमिश्रेण विज्ञानभिक्षुरादिभिराचार्यैः स्वकीयैः व्याख्याभिः प्रकाशितम्। इत्थं स्फोटवादः व्याकरणस्य योगदर्शनस्य च प्रमुखः सिद्धान्तोऽस्ति।

**योगदर्शने स्फोटवादः**:- वाचकशब्दप्रतिपादनाय व्यासदेवः, वाचस्पतिमिश्रः, विज्ञानभिक्षुः, हरिहरानन्द आरण्यकः, नागेशभट्टादय आचार्याः सर्वप्रथमं त्रिविधानां शब्दानामुल्लेखं कृतवन्तः। येन वाचकशब्दस्य अन्ययोः द्विप्रकारकयोरवाचकशब्दाभ्यां भेदप्रदर्शनं भवितुमर्हति।

**त्रिविधाः शब्दाः**:- आचार्यविज्ञानभिक्षुरभिमते शब्दाः त्रिविधाः-

१. शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरूतज्ञानम्।यो. सू., ३.१७.



वर्णभिन्नः, वर्णात्मकः स्फोटात्मकः च। विज्ञानभिक्षु-अनुसारं सामान्यतः एषा धारणा वर्तते यत् वाण्योच्चारितानां वर्णानां समूहः शब्दोऽस्ति, कर्णयोर्वा श्रूयमाणा ध्वनिरेव शब्दः इति। विषयेऽस्मिन् वाणी वर्णानामुच्चारणे एव कृतार्था भवति। शङ्खादिना वा वागिन्द्रियेण सह उदानवयोरभिघाताख्यसंयोगेन ध्वनेरुत्पत्तिर्जायते।[2] ध्वनिरेषा वीचीतरङ्गन्यायेन ध्वनिजन्यः ध्वन्यन्तरः पुनः च तज्जन्यध्वन्यन्तरः-क्रमेणानेन परिणता भवति। रूपस्यास्याः या ध्वनिजन्याध्वनिः कर्णेन्द्रिये आगच्छति, तामेव ध्वनिपरिणामः इति कथितवान्।[3] श्रोत्रदेशेन सम्बद्धस्यास्य प्रथमध्वनेः परिणामविशेषस्याभिधानं वर्तते-नादः। पूर्वोक्तेन शङ्खादिना सह अभिघाताख्यसंयोगाधारेण वीचीतरङ्गन्यायेन च ध्वनेः परिणामविशेषः नादः वर्णभिन्नः अवर्णशब्दः वा इति नाम्ना कथ्यते। अनेन प्रकारेण वागिन्द्रियेण सहोदानवायोरभिघाताख्यसंयोगाधारेण वीचीतरङ्गन्यायेन च ध्वनेः परिणामविशेषः नादः 'वर्णः' इति नाम्नाभिहितं भवति अर्थात् अनेन प्रकारेण नादः एव वर्णभिन्नः शब्दः वर्णात्मकः वा शब्दोऽस्ति।[4] शब्दस्य तृतीयाभेदोऽस्ति स्फोटात्मकः।

न तु वर्णभिन्नः शब्दः वाचकोऽस्ति, नैव वर्णात्मकः शब्दोऽपि वाचकः इति।[5] यतो हि वाचकत्वाभिधानाय वर्णानां साहित्यं

२.ध्वनिर्नाम वागिन्द्रियशङ्खादिष्वभिहतस्योदानवायोः परिणामभेदः।यो. वा; ३.१७.

३. येन परिणामेनोदानवायुर्वक्तृदेहादुत्थाय शब्दधारां जनयन् श्रोतृश्रोत्रं प्राप्नोति।वही.

४. (क) तस्य ध्वनेः परिणामभूतं वर्णावर्णसाधारणं नादाख्यं शब्दसामान्यमेव श्रोत्रस्य विषयः।....... स च शब्दो वर्णजातीयत्वेन वर्ण इत्युच्यते।यो.वा., ३.१७.
(ख) ध्वनिर्नाम वागिन्द्रियादिष्वभिहतस्योदानवायोः परिणामभेदः। ना.बृ.वृ., ३.१७.

५. वागिन्द्रियजन्यः शब्दो वर्ण एव न तु शृङ्गादिशब्दो नापि वाचकं पदम्।यो. वा., ३.१७.

नितान्तमपेक्षितं वर्तते। अयं साहित्यः सहभावः एकीभावः वा वार्णानां सह-स्थितिः वर्तते। किन्तु विनाशशीलानां वार्णानां सहस्थितिः कथमपि न सम्भवति। यथा- 'गोः' शब्दस्यान्तिमवार्स्य विसर्जनीस्य उत्पत्तिकाले गकारो नश्यति। स्थितावस्यां गकारेण सह विसर्जनीयस्य सहस्थितिः कथं सम्भवितुं शक्यते? अतः वार्भिन्नेन शब्देन सदृशो वार्तात्मकः शब्दोऽपि वाचको नास्ति, इति स्वीकरणीयम्।

अत एवार्थस्य वाचकोऽस्ति-शब्दस्य तृतीयः भेदः पदस्फोटः। आचार्यविज्ञानभिक्ष्वानुसारं स्फोटज्ञानस्य प्रक्रिया इत्थमस्ति- (१) वागिन्द्रियस्य अष्टस्थानेषु केनापि स्थानविशेषेण सहोदानवायोरभिघाताख्यसंयोगेन तद्-तद् वार्णानामुत्पत्तिर्जायते अर्थात् उरः, कण्ठः, शिरः, जिह्वामूलः, दन्तः, नासिका, ओष्ठः, तालुः चैतेऽष्टौ वर्णानामुच्चारणस्थानानि सन्ति।[६] (२) प्रत्येकः वर्णग्राही एकः एकः श्रावणप्रत्यक्षः भविष्यति।[७] (३) तद्-तद् श्रावण-प्रत्यक्षात् तद्-तद् वर्णविषयकः एकः एकः संस्कारो भविष्यति (४) तद्-तद् संस्कारात् पदविशेषघटकसमस्तवर्णविषयका स्मृतिर्जायते। (५) तादृशा स्मृतिसहकृतान्तःकरणेन गकारोत्तरा-ओकारोत्तरा-विसर्जनीयरूपा आनुपूर्व्यायुक्तः गोपदात्मकः पदस्फोटस्य मानसं प्रत्यक्षं (गोः अयमेकं पदमस्तिइत्या-कारकं ज्ञानम्) भविष्यति।[८]

६. (क) अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च।। वही; पा. शि. १३.
(ख) वागिन्द्रियं वर्णव्यञ्जकमष्टस्थानकम्। त. वै., ३.१७.

७. नानेकवर्णपदेषु श्रोत्रेण ग्रहीतुं शक्यते। यो. वा., ३.१७.

८. (क) तथा चायं तृतीयः शब्दोऽन्तः करणस्यैव ग्राह्यः। वही.
(ख) अखण्डः एकः स्फोटाख्यः............अन्तः करणस्यैव ग्राह्यः।
ना.बृ. वृ., ३.१७.



तादृश-पदस्फोटविषयकात् ज्ञानादेव अर्थस्मृतिर्जायते।[९] अनेन प्रकारेण क्षणिक-क्रमिक-प्रयत्नैकसाध्य-सखण्डवर्णानां च माध्यमेन नित्य-अक्रम-प्रयत्नैकसाध्य-अखण्डपदस्फोटस्य च ज्ञानं भवति।

**स्फोटात्मकशब्दे प्रमाणम्**- 'गौः' अयमेकं पदमस्ति-इत्याकारकं व्यवहारमेव स्फोटात्मके शब्दे प्रमाणमस्ति।[१०] वर्णमात्रं प्रतीतेः विषयं नक थितुंश ाक्यते;य तो हिप्र यत्नभेदेनउ च्चारितेषुअ नेकेषुव र्णेषु अभिन्नमेकं निमित्तं विना 'अयमेकं पदमस्ति' इत्याकारका प्रतीतिः कदापि न भवितुं शक्नोति। येन प्रकारेण एकस्मिन् सूत्रे नानुस्यूतमानानां पुष्पाणां विषये-'इयमेका माला अस्ति'- इत्याकारकं ज्ञानं न दृश्यते। अतः अनुभवसिद्धस्य स्फोटात्मकशब्दस्य स्वीकरणमावश्यकमस्ति।

अस्य स्फोटरूपस्य पदस्य प्रतीतिः उच्चारितैः श्रूयमाणैः वर्णैः च शाब्दबोधस्य वासनया वासितेनान्तःकरणेन नित्यरूपेण चलायमानशब्दार्थ-व्यवहारपरम्परया भवति। अयं 'पदस्फोटः' अखण्डः, एकः, अक्रमः एवं बुद्धिगतः भवति तथा वर्णेषु अन्तिमवर्णस्य ज्ञानेन अथवा निर्बाधश्रवणेनाभिव्यज्जितः भवति।[११]

सर्वाणि वाचकपदानि स्फोटारूपाः सिद्धाः अभवन्। अतः अत्र शङ्का जायते यत् स्फोटरूपाणि सर्वाणि वाचकपदानि अखण्डानि, अक्रमाणि वर्णेभ्यः भिन्नानि च भवन्ति, तदा कथं ज्ञायते यत् अमुकं-पदं 'गो' अर्थस्य वाचकः, अमुक-पदञ्च 'अश्व' अर्थस्य

९. पूर्वपूर्ववार्संस्काराणां तत्स्मृतीनां चान्तःकरणनिष्ठानामन्तःकरण सह-कारित्वमेवोचितम्। अतः स्मृतानां वर्णानां मनसैवानुपूर्वी ग्रहीतुं शक्यते।
यो. वा., ३.१७.

१०. (क) गौरित्येकपदमिति व्यवहारस्तु स्फोटे प्रमाणम्। वही.
(ख) गौरित्येतदेकं पदमिति, तया पदं गृह्यते। त. वै., ३.१७.

११. यद्यपि तत्पदं स्फोटाख्यम् एकमेव, न तु वर्णवदनेकम्; एकत्वे प्रमाणमेक-बुद्धिविषयमिति, तथा वक्तुरेकेनैवं प्रयत्नेन ध्वन्यादिद्वारोत्पादितम्; वर्णास्तु

वाचकोऽस्ति। अस्याः शङ्कायाः निराकरणाय आचार्यविज्ञानभिक्षुः कथयति यत् तस्य पदस्य (समूहस्य) विषयाणां पृथक्-पृथक् व्यवस्थाअ र्थात्अ र्थविभाजनस्य ि नयमनंस ङ्केतग्रहेणभ वति। यथा एतेषां निश्चितवर्ण्णानाम् अस्य प्रकारकस्यैकीभवनम् (आनुपूर्वीः) अर्थात् बुद्धिनिष्ठस्फोटः अस्यार्थस्य वाचकोऽस्ति-इत्याकारकी विषयव्यवस्था क्रियते।[१२]

अयं सङ्केतनाम पदार्थः किमस्ति? अस्य ग्रहणं कथं भवति? तथा अनेन कीदृशः व्यापारः भवति? अस्याः शङ्कायाः समाधानार्थम् आचार्यवाचस्पतिमिश्रः कथयति यत् पद-पदार्थानां परस्परः अध्यासरूपः अर्थात् आरोपितोऽभेदरूपः उक्तसङ्केतः स्मृत्यात्मकोऽस्ति।[१३] यः शब्दः सैव अर्थोऽस्ति तथा योऽर्थः सैव शब्दोऽस्ति। इतरेतराध्यासरूपोऽयं 'सङ्केतः' अर्थस्य निश्चयं न कारयति, किन्तु व्याकरणम्, स्मृत्या शब्देन स्मृतोऽस्ति।[१४] अत्रेदं ध्यातव्यं यत् सङ्केतनाम अन्योन्याध्यासः तु शब्दार्थयोः मध्ये भवति। अर्थ-ज्ञानयोः मध्यस्य तथा शब्द-ज्ञानयोः मध्यस्येतरेतराध्यासं तु 'सङ्केतः' न कथ्यते। अतः सूत्रकारः त्रिषु मध्यस्य (वर्तमानस्य) अध्यासं प्रकटीकरणाय 'शब्दार्थप्रत्ययानामितरेतराध्यासात्' इत्यस्य कथनं कृतवान्। 'सङ्केत'शब्दस्य प्रयोगेन तेषां कार्यः न चलितुंमशक्नोति। अतः अस्मिन् विषये विज्ञानभिक्षुः कथयति यत् एतेषु सङ्केतग्रहत्वादेव शब्दार्थयोः अन्योन्याध्यासः भवति, किन्तु शब्दार्थस्य प्रत्ययेन सह एकाकारत्वात् यः इतरेतराध्यासो भवति, सः

१२. तस्य पदस्य प्रविभागो विषयव्यवस्था सङ्केतग्रहादेव भवति, प्रविभागमेवाह-एतावतामिति। एतावतां वर्णानाम् एवंजातीयक एवमानुपूर्वीकोऽनुसंहारो मिलनमेतस्यार्थस्य वाचक उपस्थापक इत्येवंरूपो विभाग इत्यर्थः। वही.

१३. स्मृतावात्मा स्वरूपं यस्य स तथोक्तः। त. वै., ३.१७.

१४. न हि कृत इत्येवं सङ्केतोऽर्थमवधारयति, अपि तु स्मर्यमाणः। वही.



तु प्रसिद्धः एव अस्ति।[१५] 'गौः' अयमेव शब्दोऽस्ति, 'गौः' अयमेव अर्थोऽस्ति, 'गौः' अयमेव ज्ञानमस्ति। अत्र शब्दम्, अर्थं ज्ञानञ्च गौः-रूपेणैव स्वीकृतवान्। यद्यपि ध्यानावलोकनेन त्रयः पृथक्-पृथक् वस्तूनि सन्ति, नैकरूपाणि।

'गौः' शब्दः तु गकारः, औकारः, विसर्गः चैतेषां वर्णानां क्रमानु-रोधात् ध्वनिसमूहेन व्यञ्जि तः बुद्धिनिष्ठः 'पदस्फोटः' एव भवति। एतस्मात् भिन्ना शृङ्गाभ्यां, पुच्छेन सास्नया च युक्ता पशुजातिगता 'गौः' एव 'गौः' अर्थोऽस्ति तथा अनयोः भिन्ना गोत्वाकाराकारितवती बुद्धिवृत्तिरेव 'गोः' ज्ञानमस्ति। शब्दस्य, अर्थस्य ज्ञानस्य चास्यां भिन्नतायां जनाः प्रतिक्षणं ध्यानं दातुं न शक्नुवन्ति, फलतः तेषां बुद्धौ शब्दार्थज्ञानानां सङ्कीर्णा एवम् अभिन्ना प्रतीतिः भवति। एतदेव एतेषां त्रयाणाम् इतरेतराध्यासपूर्वक-सङ्करोऽस्ति।

**उपसंहारः**-अ तःस्फ ोटवादःय ोगदर्शनस्यप्र मुखःि सद्धान्तोऽस्ति तथा इमं सर्वे योगाचार्याः स्वीकृतवन्तः। यद्यपि केचिद् आचार्याः अस्मिन् विषये न विचारितवन्तः, परन्तु अनेनेदं न कथयितुं शक्यते यत् तान् अयं वादः स्वीकार्यः नासीत्। यदि ते स्फोटवादस्य समर्थकानां पूर्वाचार्याणाम् अनेन मतेन असहमताः अभवन् तर्हि अवश्यमेव स्वकीयमौलिकसिद्धान्तानां स्थापनम् एवं पूर्वाचार्याणां मतानां खण्डनम् अकुर्वन्। यतो हि मानवमात्रस्य स्वभावो वर्तते यत् सःस्व कीयमतानांस्थ ापनंत थात ेषांप्र सिद्धौप्र यत्नशीलोभ वति। परन्तु तैः नैतादृशं कृतम्। अतः इदं कथितुं शक्यते यत् सर्वे

१५. तत्र सङ्केतग्रह एव शब्दार्थयोरितरेतराध्यासः शब्दार्थयोस्तु प्रत्ययेन सहैकाकारत्वादन्योन्याऽध्यासः प्रसिद्ध एवेति भावः। यो. वा., ३.१७.

Regd. No. 7420/63

# फार्म–४

| | | |
|---|---|---|
| 1. | प्रकाशन–स्थान | साधु–आश्रम, होश्यारपुर |
| 2. | प्रकाशन–अवधि | त्रैमासिक |
| 3. | मुद्रक का नाम | प्रो. इन्द्रदत्त उनियाल |
| | (क्या भारत का नागरिक है?) | भारतीय |
| | (यदि विदेशी है तो मूल देश) | × |
| | पता | विश्वेश्वरानन्द–वैदिक–शोध–संस्थान, डाकघर— साधु–आश्रम, होश्यारपुर |
| 4. | प्रकाशक का नाम | प्रो. इन्द्रदत्त उनियाल |
| | (क्या भारत का नागरिक है?) | भारतीय |
| | (यदि विदेशी है तो मूल देश) | × |
| | पता | विश्वेश्वरानन्द–वैदिक–शोध–संस्थान, डाकघर— साधु–आश्रम, होश्यारपुर |
| 5. | सम्पादक का नाम | प्रो. इन्द्रदत्त उनियाल |
| | (क्या भारत का नागरिक है?) | भारतीय |
| | (यदि विदेशी है तो मूल देश) | × |
| | पता | विश्वेश्वरानन्द–वैदिक–शोध–संस्थान, डाकघर — साधु–आश्रम, होश्यारपुर |
| 6. | उन व्यक्तियों के नाम व पते जो समाचार–पत्र के स्वामी हों तथा जो समस्त पूंजी के एक प्रतिशत से अधिक के सांझेदार या हिस्सेदार हों। | विश्वेश्वरानन्द–वैदिक–शोध–संस्थान–सभा, होश्यारपुर |

मैं, इन्द्रदत्त उनियाल एतद्–द्वारा घोषित करता हूं कि मेरी अधिकतम जानकारी एवं विश्वास के अनुसार ऊपर दिए गए विवरण सत्य हैं।

**इन्द्रदत्त उनियाल**
प्रकाशक के हस्ताक्षर